तिरुपतिस्थराष्ट्रियसंस्कृतविश्वविद्यालयग्रन्थमाला - १८५

# वैखानसागमकोशः

दशमं सम्पुटम्

## ९.प्रायश्चित्तप्रकरणम्

प्रथमो भागः

प्रधानसम्पादकः

**आचार्यः हरेकृष्ण शतपथी**
**कुलपतिः**

सम्पादकौ

**आचार्यः लक्ष्मीनरसिंहभट्टः**
**आचार्यः हयवदनपुराणिकः**

विषयविशेषाणां आङ्ग्लसारः
**आचार्यः प्रभाकर आपटे**

**राष्ट्रियसंस्कृतविश्वविद्यालयः**

तिरुपतिः

२००९

RASHTRIYA SANSKRIT UNIVERSITY PUBLICATION SERIES -185

# VAIKHĀNASA ĀGAMA KOŚA

## Volume X

# 9. Prāyaśchitta Prakaraṇam

## PART - I

*Chief Editor*

**PROF. HAREKRISHNA SATAPATHY**
**Vice-Chancellor**

*Editors*

**PROF. LAKSHMINARASIMHA BHATTA**

**PROF. K. HAYAVADANA PURANIK**

*Topical Summary*

**PROF. P. PRABHAKARA APTE**

**RASHTRIYA SANSKRIT UNIVERSITY**

**TIRUPATI**

**2009**

राष्ट्रियसंस्कृतविश्वविद्यालयग्रन्थमाला -१८५

**वैखानसागमकोशः - दशमं सम्पुटम्**

**९. प्रायश्चित्तप्रकरणम्**

**प्रथमसंस्करणम् : २००९**

**प्रतिकृतयः : १०००**



प्रधानसम्पादकः प्रकाशकश्च

**आचार्यः हरेकृष्णशतपथी**

**कुलपतिः**

राष्ट्रियसंस्कृतविश्वविद्यालयः, तिरुपतिः, आन्ध्रप्रदेशः, भारतम्

पुस्तकप्राप्तिसङ्केतः

**कुलसचिवः**

राष्ट्रियसंस्कृतविश्वविद्यालयः, तिरुपतिः - ५१७ ०६४

आन्ध्रप्रदेशः, भारतम्, दूरवाणी - ०८७७ - २२७८०९

ई-मेल : registrar_rsvp@yahoo.co.in

वेबूसाइट : www.rsvidyapeetha.ac.in

मुद्रणाय सज्जीकृतः

**आगमकोशपरियोजना**

राष्ट्रियसंस्कृतविश्वविद्यालयः, तिरुपतिः

**मूल्यम् : रू.** 290/-

**मुद्रकः** स्टूडेण्ट्स अफ्सेट, तिरुपतिः

Grams: Vidyapeetha

Prof. Harekrishna Satapathy
Vice-Chancellor

**Rashtriya Sanskrit University**
(University established under sec.3 of UGC Act, 1956)
**Tirupati- 517 064 (A.P.)**
(Accredited with A+ Grade by NAAC)

Tel/Fax: 0877 - 2287680
(O) 2287838
(R) 2287826
E-mail : hks_vc@yahoo.com

*" Centre of Excellence in the Subject of Traditional Sastras"*

## FOREWORD

It gives me immense pleasure to write a few lines in way of foreword to the volume X of *Vaikhanasa Agama Kosa* containing the *Prayaschitta Prakaranam* (Part-I). This volume, like others, is also a visible outcome of the tireless offorts and intellectual exercises of the scholars working in *Agama Kosa* project of our University. The Rashtriya Sanskrit University has been able to produce and present nine volumes of *Agama Kosa (Vaikahanasa)* before the world of scholars and researchers. Before producing each volume, the entire gamut of literature pertaining to Agama Scriptures is ransacked, reviewed and revisited by the researchers working in the project and the cream portions of the vast Agama literature are being projected in the form of encyclopaedia in a systematic and disciplined manner. This is the reason why all the volumes of *Vaikhanasa Agama Kosa*, published so far have earned the appreciation of the learners, researchers and scholars of the country and abroad. In order to make the book more accessible to a wider range of scholars, an exhaustive summary of the concerned volume is given in Sanskrit & English in the beginning and this is, no doubt, a useful addition to the book.

Rashtriya Sanskrit University Publication Series - 185

**VAIKHĀNASA ĀGAMA KOŚA** - Volume X

**9. Prāyaśchitta Prakaraṇam**

**First edition : 2009**

**No of copies : 1000**



*Chief - Editor & Publisher*

**Prof. Harekrishna Satapathy**
**Vice-Chancellor**
Rashtriya Sanskrit University, Tirupati, Andhra Pradesh, India.

*Book available at*

**Registrar**
Rashritya Sanskrit University
Tirupati - 517 064, Andhra Pradesh, INDIA
Phone : 0877- 228709
E-mail : registrar_rsvp@yahoo.co.in
Website : www.rsvidyapeetha.ac.in

Prepared by **Agama Kosa Project**
Rashtriya Sanskrit University, Tiupati.

**Price : Rs.** 290/-

**Printed at :** Students Offset, Tirupati

Data Correction & DTP - N.Venkata Ramana Prasad.
The book has been set-in pages in Computer Unit, Agama Kosa Project.

The present volume of the *Vaikhanasa Agama Kosa* deals with the *Prayaschitta Prakaranam.* The theme of the volume has been divided into five areas i.e. i) Atonement for defects in temple construction ii) Atonement for defects in Image-making iii)Atonement for installation defects iv) Expiation for defects in Routine-worship and v) Atonement for flaws in Ablution. All these things have been described elaborately in the present volume. The editors, while preparing this reliable document, have referred to so many scriptures and research papers available in the concerned field. All the relevant portions and quotations have been carefully chosen and incorporated in the book to make it more dependable.

In our tradition, *Prayaschittam* or atonement, plays a vital role particularly in respect of bringing reforms to one's commission and omission of various acts. To err is human and in the process of doing some work, committing some major or minor mistakes, sometimes knowingly or unknowingly, is inevitable. Our ancient sages and seers, with an intention to make work more perfect, pure and scientific, have prescribed some actionable procedures to overcome the defects or lapses. Moreover, some times there occur incidences like earthquakes etc., which are beyond human control for which expiations are prescribed. In addition, some special rituals are prescribed for benevolent results also. This procedure is called *'Prayaschittam'* or atonement. While constructing the temples, carving the images or installing them on a raised platform or performing the daily rituals or offering *Naivedyam,* the persons engaged in the respective processes are likely to make some mistakes or come across with some unforeseen circumstances. In that situation, the authors of the *Agama Sastras* have prescribed some specific atonement of removal of specific

defects. These procedures are supposed to be followed in the temples with a view to bringing perfection to the rituals. Needless to mention that all these things have been neatly narrated in this volume for which the scholars associated with the process of preparation and publication of this book, deserve appreciation from all quarters. This publication, I am sure, will cater to the needs of the readers and researchers in the same way in which the previous volumes have done. The University, indeed, is feeling proud and honoured to bring out such prestigious and useful publications intended to preserve and promote the cardinal principles of our glorious culture and hoary traditions.

I wish the publication a great success.

27-4-2009
Tirupati.

**(H.K. Satapathy)**
Vice-Chancellor

**Rashtriya Sanskrit University ; Tirupati(A.P)**

आगमकोशपरियोजना

Āgama Kośa Project

# उपोद्धातः

संविदितमेवेदं समवगतसर्वशास्त्राणां सङ्ख्यावतां समेषां यदत्र निसर्गकरुणा-वरुणालयस्य श्रुतिशिरसि विदीप्तस्य च भगवतः श्रीनिवासस्य राजधान्यां तिरुपतौ संस्कृतं संस्कृतिं च प्रतिष्ठापयितुं केन्द्रसर्वकारेण संस्थापितमिदं राष्ट्रियसंस्कृतविद्यापीठमासंस्थापना-न्निगमागमशास्त्रसंरक्षणदीक्षम् अभिनवप्रयोगशीलं संस्कृतमातरं संसेवमानं भारते स्थेयसीं प्रतिष्ठामध्यास्त इति।

अध्यात्मचिन्तनप्रधानेऽस्मिन् भारतवर्षे सकललोकोज्जीवनाय प्रवृत्तानां तन्त्रापराभिधाना-नामागमानां निरन्तरप्रचारः अनादेः कालात्प्रवर्तते । अविच्छिन्नगुरुशिष्यपरम्परया आगतो ग्रन्थसन्दर्भ आगमपदेनाभिधीयते। यद्यप्याचार्यमुखादधीत्य वेदानधिगच्छन्ति शिष्या इति वेदा अप्यागमशब्देन व्यवह्रियन्ते तथापि चिरादस्मत्पूर्वजाः वेदान् निगमशब्देन विग्रहाराधनप्रति-पादकानि तन्त्राण्यागमशब्देन च व्याजह्रुः।

भारतीयसंस्कृतिनिधेः वेदस्योपबृंहणाय प्रवृत्ताः शिवविष्णवादीनामाराध्यदेवानां पारम्यं प्रतिपादयन्तश्चागमाः शैवशाक्तवैष्णवभेदेन त्रेधा भिद्यन्ते। तत्र शैवागमाः कापालकालामुख-पाशुपतशैवभेदेन चतुर्धा भवन्ति। तत्र शैवभेदः पुनः वाम-दक्षिण-सिद्धान्तभेदेन त्रिधा। दक्षिणभेदे अन्तर्भूतानां काश्मीरागमानामुत्तरदेशेष्वेव प्रचुरः प्रचारः, शैवसिद्धान्तागमानां तु दक्षिणदेशेष्वेव प्रचारः। शैवागमाः शिवपारम्यं शिवपूजादिकं च प्राधान्येन प्रतिपादयन्ति। शाक्तागमा दक्षिणाचारवामाचारभेदेन द्विविधा भवन्ति। दक्षिणाचारः प्रायेण वैदिकमार्गानुसारी। वामाचारस्तु वैदिकमार्गपरिभ्रष्ट इति वदन्ति। उभयेऽपीमे शक्तिपारम्यं शक्तिपूजादिकं च विशेषतः प्रतिपादयन्ति। वैष्णवागमाश्च वैखानसपाञ्चरात्रभेदेन द्विविधा भवन्ति। उभयेऽपीमे विष्णुपारम्यं विष्णुपूजादिकं च प्राधान्येन प्रतिपादयन्ति।

पाञ्चरात्रागमाः पुनर्भगवता नारायणेन स्वयमुपदिष्टाः दिव्याः , मुनिभाषिता आप्तोक्ता अदिव्या इति द्विविधाः।

भगवता विखनसा भृग्वत्रिमरीचिकाश्यपेभ्यश्चतुर्भ्यः उपदिष्टः तैश्च प्रचारं नीतः वैखानसागमः।

शैव-वैष्णवाद्यागमानां विषयप्रधानाः आगमकोशग्रन्थाः समेषामागमतत्त्वावबोध-कुतूहलिनां महते उपकाराय कल्पन्त इति विद्यापीठसंस्थापकनिदेशकानां डा. बि. आर् . शर्ममहोदयानामभिसन्धिमनुरुध्य तदानीन्तनेन तिरुपतिकेन्द्रीयसंस्कृतविद्यापीठसंघेन (Kendriya Sanskrit Vidyapeetha Tirupati Society) विमर्शनिपुणानामन्ताराष्ट्रियख्यातिभृतां विद्यापीठसंघाध्यक्षाणां डा. वि. राघवन् महोदयानामाध्यक्ष्ये संशोधनप्रकाशनसमितिः व्यवास्थाप्यत यस्यां संशोधनप्रकाशनमर्मज्ञाः डा. एस् . एम् . कत्रे , डा. पि. एल् . वैद्य, डा. आर्येन्द्रशर्मा , डा.बि. आर् . शर्मा इत्येवं विश्वविख्याताः विद्वांसः सदस्या आसन् । तेषां मार्गदर्शनमनुरुध्य विद्यापीठस्य अनुसन्धानप्रकाशनविभागस्य विद्वद्भिः क्रिस्तूत्तरचतुः षष्ट्यधिकनवशतोत्तरैकसहस्रतमवत्सरतः क्रिस्तूत्तरषडशीत्यधिकनवशतोत्तरैकसहस्रतमवत्सरं यावत् (1964 -1986 A.D) उपलभ्यमानेभ्यः वैखानसपाञ्चरात्रागमग्रन्थेभ्यः, कतिपयेभ्यः शैवागमग्रन्थेभ्यश्च आगमकोशोपयोगिनो विषयाः सङ्कलिताः संशोधिताश्च।

तैर्विद्वद्भिःसङ्कलिताःसंशोधिताः अपेक्षिताश्च वैखानसागमग्रन्थभागाः वैखानसागम-कोशसम्पुटेषु समावेश्यन्त समावेशयिष्यन्ते चेत्येतदत्राविस्मरणीयमास्ते।

समापितविषयसङ्कलनेभ्यो वैखानसागमग्रन्थेभ्य उद्धृतं वैखानसागमकोशस्य प्रथमं सम्पुटमर्चन-वासुविधान-आलयनिर्माणसंज्ञकप्रकरणत्रययुतं त्रिनवत्यधिकनवशतोत्तरैक-सहस्रतमे (1993) क्रैस्तवीयसंवत्सरे विद्यापीठेन प्रकाशितम् । निरवरोधं पुनरागमकोश-कार्यस्य निर्वर्तनाय विद्यापीठे आगमकोशपरियोजना मानवसंसाधनविकासमन्त्रालयेन द्व्यधिकद्विसहस्रतमे क्रिस्तुवत्सरे (2002) भूयः प्रकल्पिता।

बेरनिर्माण-बेरप्रतिष्ठा-नित्यार्चन-उत्सव-स्नपनप्रकरणगतविषयविशेषाः वैखानसागम-कोशस्य द्वितीयसम्पुटमारभ्य नवमसम्पुटपर्यन्तभागेषु प्रकाशिताः। सम्प्रति वैखानसागमकोशस्य दशमे सम्पुटे प्रायश्चित्तप्रकरणस्य विषयविशेषाः उपस्थाप्यन्ते।

किञ्च आगमशास्त्रानुरागिणां विदुषां सुखावबोधाय विविधशीर्षकगतविषयविशेषाणां सारः सम्पुटेऽस्मिन् पृथक् संयोजितः। अधिगताङ्ग्लभाषाणां जिज्ञासूनां कोशगतसंस्कृत-सारभागस्य सुबोधार्थं आचार्य पि. प्रभाकर आष्टे महोदयैः आङ्ग्लभाषयाऽनूदितः सारभागोऽपि अत्र सन्निवेशितो विराजते। एतत्कोशनिर्माणप्रकारविषये तथा क्लिष्टाया आगमशास्त्रीयभाषायाश्च विषये प्रथमसम्पुटे एव विस्तृततयोक्तमेवेति नात्र प्रतन्यते।

वैखानसागमकोशस्य निर्माणकार्ये उपकृतवद्भ्यः विद्यापीठस्य अनुसन्धानप्रकाशन-विभागस्थतदानीन्तनसूरिभ्यः श्रीमद्भ्यः डा. एम् . डि. बालसुब्रह्मण्यम् , डा. मुरलीधरपाण्डेय, डा. आर्. महादेवन्, डा. वि. स्वामिनाथन्, डा. पि. पि. आपटे, डा. यु. शङ्करभट्ट, डा. राघवप्रसाद चौधरी, लक्ष्मीनरसिंहभट्ट, ए. श्रीनिवास अय्यंगार् , पं. के. शठकोपाचार्य, डा. एन्. एस्. रामानुजताताचार्य, के. ए. बालसुब्रह्मण्यम् , डा. उमारमण झा, यशपालखजूरिया, डा.जयप्रसादबलोधी, डा. टि. जि. अनन्तसुब्रह्मण्यम् , एम्. ए. भट्ट, के. रघुनाथन्, श्रीराममिश्र, डा. के. हैमवतीशम् , डा. के. ई. गोविन्दन् , एम्. सायिरामसुब्रह्मण्यशर्मा, सि हेच् . पि. सत्यनारायण, एस्. सुब्बय्य संज्ञकेभ्यः शतशो धन्यवादान् वितरावः।

वैखानसागमकोशस्य दशमसम्पुटस्य प्रकाशने उपकृतवद्भ्यः प्राच्यप्रतीच्योभय-विद्याविभासुरेभ्यः साहित्यादिविविधशास्त्रकुशलेभ्यः कुलपतिभ्यः आचार्येभ्यः हरेकृष्णशतपथि महोदयेभ्यः, कुलसचिवेभ्यः आचार्येभ्यः ए. गुरुमूर्तिमहोदयेभ्यश्च आधमर्ण्यं प्रकटयावः।

ईक्ष्य (प्रूफ) संशोधने सहायकः डा. सुधांशु शेखर महापात्रमहोदयः साधुवादेन स्मर्यते सादरम् । वैखानसकोशग्रन्थस्यास्य टङ्कनकर्मणि तथा पुस्तकसमीकरणकार्ये च सहकृतवन्तं श्री एन् . वेङ्कटरमणप्रसाद्-नामानमाशीर्भिः योजयावः।

जगज्जीवातोः श्रीनिवासस्य कृपया वैखानसागमकोशस्य दशमं सम्पुटमिदं व्युत्पित्सूनाम् आगमतत्वकौतुकिजनानां विदुषां च बहूपकाराय स्यादिति मन्वहे।

तिरुपतिः

दिनाङ्कः २७.४.२००९

**आचार्यः लक्ष्मीनरसिंहभट्टः**

**आचार्यः हयवदनपुराणिकः**

# सूचीपत्रम्



***

# विशिष्टविषयसूची

## १. आलयनिर्माणदोषप्रायश्चित्तम्

## २. बेरनिर्माणदोषप्रायश्चित्तम्

## ३. प्रतिष्ठादोषप्रायश्चित्तम्

## ४. नित्यार्चनदोषप्रायश्चित्तम्

## ५. स्नपनदोषप्रायश्चित्तम्

***

# वैखानसागमकोशस्य दशमं सम्पुटम्

## ९. प्रायश्चित्तप्रकरणम् [प्रथमो भागः]

## विषयविशेषाणां सारः

### १. आलयनिर्माणदोषप्रायश्चित्तम्

प्रायो नाम दोषः। तस्य चित्तं नाम परिहारः। कर्मणि प्रमादाद्वाऽशक्तेर्वाऽदृष्टाद्वा संभवन्तो ये दोषास्तेषां परिहारः जपहोमादिना कर्तुं शक्यते। तत् प्रायश्चित्तम्। कर्मणामिष्टफलसिध्यर्थं तदावश्यकम्। व्याधेरौषधेन यथा शान्तिः एवं कर्मणि सम्भवतां न्यूनातिरेकलोपादिदोषाणां प्रायश्चित्तेन शान्तिः करणीया। कर्मकाले उत्पाताद्यमङ्गलदर्शनेन सूचितानामपि दोषाणां शान्तिहोमादिना परिहारः करणीयः। अन्यथा कर्मणा लोकस्य शान्तिसुखसमृद्धिरूपेष्टफलं न जायेत। जायेत चानिष्टं राष्ट्रस्य दुर्भिक्षव्याधि-शत्रुचोरादिभयरूपम्। अतो वैदिकेषु कर्मसु क्रियाविपर्यासे कर्तृविपर्यासे मन्त्रलोपे द्रव्यलोपे कालविपर्यासेऽनुष्ठाने न्यूनातिरिक्ते सङ्करादौ च सर्वत्र सर्वदोषपरिहाराय शान्तिप्रायश्चित्तकर्माणि आगमशास्त्रे विहितानि।

भूपरीक्षादिकर्मणि अङ्कुरार्पणं न कृतं चेत् ब्रह्मादीनां षण्णां मन्त्रैर्वैष्णवैः पालिकाधिपतीनां जयादीनां च मूर्तिमन्त्रैः होमं कृत्वाऽङ्कुरार्पणं कृत्वा पश्चात्तत्कर्माचरेत्। विशेषार्चनलोपे द्विगुणमर्चयेत्। अङ्कुरार्पणे विशेषेणार्चनं कौतुके कुर्यात्। अन्यालयाङ्गबिम्बानामुत्सवाद्यर्थेऽङ्कुरार्पणे विशेषार्चनं ध्रुवबेर एव कार्यम्। पङ्क्तिप्रमाणहानौ पङ्क्तीशमूर्तिमन्त्रैर्होमः कार्यः।

साधिवासानां कर्मणां सद्यः अङ्कुरार्पणं कर्तव्यं चेत् पूर्वरात्रौ अधिवासनं पूर्वमेव कर्तव्यम्। ततः अक्षिमोचनं कृत्वा वास्तुहोमादिकं आचरेत्। दिनद्वयेऽपि कालावकाशेऽलब्धे तु सद्यः अङ्कुरार्पणं कृत्वा नयनोन्मीलनादिकं कार्यम्।

भूपरीक्षार्थं बहिर्द्वारगमने विघ्नमायाति चेत् शान्तिहोमं कृत्वा विष्णुमन्त्रं शतवारं जपेत्। विघ्नमन्त्रमपि शतवारं जपेत्। दुर्वाक्यश्रवणे च सारस्वतमन्त्रं जप्त्वा देवं ध्यात्वा गच्छेत्। कलहे रुधिरस्रावेऽग्निदाहे च वैष्णवं सौम्यं वैष्वक्सेनं सौदर्शनं गारुडं च होमं लौकिकाग्नौ कुर्यात्। वैश्वानरमन्त्रं च जपेत्। भूपरीक्षाकाले दुर्निमित्ते जाते वैष्णवविष्णुसूक्तपुरुषसूक्तैः होमं कृत्वा विष्णुगायत्रीं सावित्रीं चाष्टशतवारं जपेत्। शाकुनसूक्तस्वस्तिसूक्ते दशवारं जपेत्।

भूपरीक्षाक्रमहीने कर्षणेऽपि क्रमहीने उक्तधान्यविहीने हलादीनां हीने गोगणनिवेदने हीने च सौम्यं वैष्णवं च हुत्वा प्रत्येकं कर्म पुनः प्रारभेत। भूपरीक्षायां अग्निदाहादौ सौम्यं वैष्णवञ्च हुत्वा लौकिकाग्नौ वैश्वक्सेनं सौदर्शनं, वारुणं च जुहुयात्।

कन्याभोजनाकरणे दुर्गामन्त्रहोमः कार्यः। कन्यादीपविच्छेदे पङ्कजस्य पतने श्रीसूक्तहोमः कार्यः। पांसुक्षये पूर्णाहुतिं मिन्दाहुतिं च जुहुयात्। भूसूक्तं जपेत्। भूपरीक्षामकृत्वा कर्षणं कृतं चेत् भूसूक्तहोमं कृत्वा पश्चात् भूपरीक्षापूर्वकं कर्षणं कार्यम्। भूपरीक्षामकृत्वा विष्णुयज्ञ आरब्धश्चेत् आहुतिसहस्रं हुत्वा भूमियज्ञं भूतहोमं च कृत्वा वृषभचतुष्टयदक्षिणां दद्यात्। आदौ विनायकार्चनं च कर्तव्यम्। अकाले भूपरीक्षा कृता चेत्, कर्षकैर्बीजवापकैश्च क्रियालोपे विपर्यासे च कृते, यथोक्तहोमद्विगुणं हुत्वा देवमर्चयेत्। तल्लोपे तन्मन्त्रेण शतवारं जुहुयात्।

हलादीनामुक्तवृक्षालाभे प्रमाणहीने च विष्णुसोमाग्निप्रजापतिहोमं व्याहृतिहोमं च कुर्यात्। वृक्षाधिपतिमर्चयेत्। सुवर्णेन हलादीनि कृत्वा कर्म कुर्यात्। युगादीनामुक्त-वृक्षालाभे भूविष्णुरुद्रात्मदैवत्यहोमं दानं च कुर्यात्। भगवन्तमभ्यर्च्य सुवर्णभारैरलङ्कुर्यात्। युगादीनां प्रमाणलोपे विष्णुप्रजापतियमरुद्रहोमान् कुर्यात्। वृषभावङ्गहीनौ चेत् विष्णुब्रह्मवीशप्रजापतिभूतर्षिमन्त्रैर्होमः कार्यः। अन्यौ वृषभौ आहरेत्। कर्षणकाले वृषभः प्रमादतो व्रणयुक्तो भवति चेत् विष्णुसूक्तपुरुषसूक्ताभ्यां होमः कार्यः। मिन्दाहुतिः

कार्या। निष्काधिकं सुवर्णं गुरवे दक्षिणां दद्यात्। कर्षणे वृषभो यदि सुप्तो मूढो भ्रान्तः पतितो रुदितो वा भवेत् तदा विष्णुगायत्रीहोमं कृत्वा दक्षिणां दद्यात्। विष्वक्सेनानपायिनोरर्चनालोपे विष्णुहोमो विष्वक्सेनानपायिहोमश्च कार्यः। वीशचक्रामिताद्यर्चनाभावेऽपि तद्दैवत्यहोमः कार्यः। रज्जुभेदे वरुणमन्त्रेण सीताभेदे श्रीमन्त्रेण दात्रभेदे ज्येष्ठामन्त्रेण च होमः कार्यः। कर्षणे युगादीनां भेदादौ अतोदेवादि ब्राह्मं प्राजापत्यं गारुडं भौतिकं च हुत्वा रूप्यदानं कुर्यात्। कर्षणे हलादीनां भेदने छेदे रज्जुच्छेदे च हलादिप्रमाण विरहवत् प्रायश्चित्तं कार्यम्। कर्षणे मन्त्रलोपश्चेत् विष्णुरुद्रसरस्वतीहोमः कार्यः। कर्षणकाले कपालास्थितुषकेशवल्मीकपङ्कसङ्करादिदर्शने तद् व्यपोह्य पञ्चगव्येनाभ्युक्ष्य सोमाग्निविष्णुहोमं कुर्यात्। भूमिहोमं वास्तुहोमं च कुर्यात्। भूपरीक्षादिदोषसामान्यप्रायश्चित्तत्वेन सोमविष्णुहोमौ कृत्वा गोगणेभ्यः सस्यं निवेद्य विप्रेभ्यो धान्यदानं कुर्यात्। कर्षणलोपे कालवापनलोपे च रात्रिविष्णुगोदानसूक्तैर्होमः कार्यः। बीजेषु केशदन्तादीनां दर्शने तत्सर्वं व्यपोह्य भस्मना गायत्रीमन्त्रेण बीजान् प्रोक्ष्य पद्माग्नौ रात्रिसूक्तेन जुहुयात्।

बीजावापानन्तरं दोषे जाते भूमिहोमं कृत्वा पुनर्बीजावापं कुर्यात्। गोगणनिवेदनाकरणे विष्णुविष्वक्सेनगरुडसुदर्शनहोमान् कृत्वा पलालतृणानि गोगणेभ्यो निवेदयेत्। पददेवताबलिलोपे तत्तत्पददेवताहोमं विष्णुब्रह्मवसुयमवरुणकुबेरहोमांश्च कृत्वा बलिमर्चयेत्। [1]सामृतक्रमहीने [2]हारकक्रमहीने शिलासङ्ग्रहणहीने च वैष्णवं

---

1. सामृतक्रमः
बाललयेऽर्चनं कुर्वन् विमानं कारयेद्बुधः।।
एतत् सामृतमित्युक्तं---------------। (स.४.३५,६)

2. हारकक्रमः
बालालयं विना पूर्वमालायारम्भणं तु यत्।
तत्तु हारकमित्युक्तम् ---------------।। (स.४.३७)

विष्णुसूक्तं च चतुरावर्त्य होमः कार्यः। क्रियासङ्करे व्याहृतिहोमः कार्यः। अकाले कर्षणे कृते भूमिहोमः कार्यः। एकाहे त्वरितः सद्यो भूपरीक्षादिकं प्रथमेष्टकाशिला-स्थापनमधिवासादि च यदि कुर्यात् तदा वैष्णवपुरुषसूक्तविष्णुसूक्तैर्होमः कार्यः। यजमानाचार्यकर्मविपर्यासे न्यक्षादिचतुर्णां होमं विष्णुसूक्तवैष्णवपुरुषसूक्तहोमं च कुर्यात्। उप्तानि बीजानि वन्ध्यत्वेन न प्ररोहन्ति चेत् कर्षणबीजावापलोपे उक्तं प्रायश्चित्तं कृत्वा गोगणेभ्यो निवेदनं कृत्वा पुनः कर्म कुर्यात्। विमानार्थं भूखननकाले शल्यलोष्टपाषाणादि यदि दृश्यते तदा विष्णुब्रह्मपञ्चभूमिदैवत्यान् होमान् कुर्यात्। भूपरीक्षायां ब्रह्मपद्मावटक्रियालोपे भूसूक्तहोमः कार्यः। वैष्णवब्रह्मवारुणहोमा अपि कार्याः। वास्तुहोमाकंरणे पाञ्चभौतिकवैष्णवव्याहृतिहोमान् कुर्यात्। वास्तुमन्त्रेण दशवारं जुहुयात्। आदौ आलयनिर्माणबेरनिर्माणप्रतिष्ठादिषु सर्वत्र कर्मसु पुण्याहवाचनं कर्तव्यम्। अन्यथा प्रायश्चित्तार्थं पञ्च ब्राह्मणान् भोजयेत्। पुण्याहमन्त्रान् द्वादशवारं जपेत्। ब्रह्मपद्मावटे कपालास्थ्यादि दृश्यते चेत् विष्णुभूमिब्रह्मदैवत्यहोमान् कृत्वा पुनर्ब्रह्मपद्मावटं कुर्यात्। पुनः विष्णुभूमिब्रह्मदैवत्यहोमान् कुर्यात्। ब्रह्मपद्मावटे वामावर्तं जलं चेत् वरुणवायुभूमिहोमाः कार्याः। जलस्य स्पन्दने चलने पांसुच्छादने च वरुणविष्वक्सेनहोमौ कार्यौ। ब्राह्मपुरुषसूक्तहोमावपि कार्यौ। जलं संकुलं चेत् ब्राह्मं भौमं वारुणं गारुडं च होमं कुर्यात्। पद्मस्याधरोत्तरत्वादौ ब्रह्मवरुणभृगुदैवत्यान् होमान् कुर्यात्। प्रक्षिप्तपद्मभङ्गे प्राजापत्यं वैष्णवं च, पद्मस्य विदिग्गतौ ब्राह्ममार्षं च, पद्मस्फोटेऽपि ब्राह्ममार्षं च होमान् कुर्यात्। ब्रह्मपद्मावटघटभेदे, स्रावे, जनानां भयसम्भवे कलहे रुधिरस्रावे च विष्वक्सेनगरुडविष्णुब्रह्मेन्द्रहोमान् रात्रिसूक्तप्राजापत्यहोमांश्च कुर्यात्। दुर्निमित्तशान्तिहीने विप्रशतं भोजयित्वा ऋत्विग्भ्यो दक्षिणां दद्यात्।

शङ्कुनिर्माणकाले द्विस्ताडने पार्षदसर्वदैवत्यहोमौ कुर्यात्। शङ्कुभेदे नाशे विपर्यये वा दिग्दैवत्यहोमं कृत्वाऽन्ते दिक्परिच्छेदनं कुर्यात्। शङ्कुभङ्गे वैष्णवं ब्राह्मं च होमं कुर्यात्। रज्जुच्छेदे यमवायुविष्णुहोमाः कार्याः। शङ्कुस्थापनलोपे परिषद्धोमः कार्यः।

आलयनिर्माणे मुख्यमार्गेणोपक्रम्य गौणमार्गाश्रयणे देवमनुमान्य शान्तिहोमं कृत्वा दक्षिणां दत्वा देवमर्चयेत्। दिक्परिच्छेदलोपे दिग्दैवत्यं वैष्णवं सौरं च होमं कुर्यात्। ततो दिक्परिच्छेदं कुर्यात्। तरुणालयलौहबालबिम्बालाभे श्रोत्रियागाराद्वा अन्यमन्दिराद्वा लौकिकं याचेत। तद्यदि ध्रुवस्यानुरूपं तर्हि तदेव कौतुकं प्रतिष्ठाप्यार्चयेत्। अन्यालयाद्यर्चितं चेत् तत्क्रियान्ते पुनः पूर्वालये समानीय शान्तिं हुत्वाऽर्चयेत्। स्थापितं नानुरूपं चेत् वैष्णवहोमं कृत्वा शुभं कौतुकं स्थापयेत्। लौकिकस्यापि लौहबिम्बस्यालाभे दारुणाऽपि कारयेत्। मूलबेरस्थापनोत्तरं लौकिकं बेरं प्रथमावरणे स्थापयित्वार्चयेत्।

तरुणालयाकरणे सर्वं निष्फलं भवति। रात्रिसूक्तपारमात्मिकमन्त्रै र्जुहुयात्। वृषभांश्च दक्षिणां दद्यात्। पूर्वमन्यदेवसमुद्दिष्टं चेत् स्थानम्, शान्तिहोमं कृत्वैव तत्स्थाने देवदेवं स्थापयेत्। देवदेवसमुद्दिष्टमपि स्थानमन्येषां कृते न गृह्णीयात्। आद्येष्टकामकृत्वा विमानकरणे ग्रामस्य यजमानस्य राष्ट्रस्य च महतीहानीर्भवेत्। अतः महाशान्तिं हुत्वा आद्येष्टकां संन्यस्य विमानं कारयेत्।

आद्येष्टकायाः शिलाया वा प्रमाणे हीनेऽधिके वा वैष्णवविष्णुसूक्तहोमौ कार्यौ। आद्येष्टकान्यासे रत्नन्यासो यदि न स्यात् तदा वैष्णवविष्णुसूक्तपुरुषसूक्तहोमान् मिन्दाहुती महीसूक्तं विच्छिन्नं च क्रमेण जुहुयात्। रत्नाधिपमन्त्रैश्च जुहुयात्। आद्येष्टकान्यासे शिलेष्टकाग्रविपर्यासो भवति चेत् सर्वदैवत्यवैष्णवविष्णुसूक्त पुरुषसूक्तहोमान् मिन्दाहुती महीसूक्तं विच्छिन्नं च क्रमेण जुहुयात्। इष्टकाग्रविपर्यासे दारुविपर्यये शिलामूलाग्रदोषे विमानाङ्गलोपे कवाटद्वारकुड्यादिविपर्यये लोपे वा न्यक्षादिमन्त्रैर्जुहुयात्। आद्येष्टकान्यास-मन्त्रविपर्यये सर्वदैवत्यवैष्णवविष्णुसूक्तपुरुषसूक्तहोमान् मिन्दाहुती महीसूक्तं विच्छिन्नं च क्रमेण जुहुयात्। इष्टकासङ्करे वैष्णवं च जुहुयात्। यजमानाचार्यविपर्यासे पौण्डरीकाग्निं समाहरेत्। इष्टकान्यासादौ दक्षिणालोपे आग्नेयं वैष्णवं च हुत्वा दक्षिणां दद्यात्। आचार्यमनुमानयेत्। आद्येष्टकाक्रियालोपे सर्वदैवत्यवैष्णवविष्णुसूक्तपुरुषसूक्तहोमान्

मिन्दाहुती महीसूक्तं विच्छिन्नं च जुहुयात्। प्राकारे आद्येष्टकान्यासलोपे परिवाराधिदैवतं वैष्णवेन समायुक्तं दशकृत्वो जुहुयात्। गोपुराद्येष्टकान्यासलोपे द्वारपालाधिदैवतं धात्रादिषड्दैवतं वैष्णवं च जुहुयात्। मण्डपादौ आद्येष्टकान्यासलोपे मण्डपाधिदैवत्यं वैष्णवं च जुहुयात्। महानसाद्येष्टकान्यासलोपे हवीरक्षकदेवतं श्रीदैवत्यम् आग्नेयं वैष्णवं च जुहुयात्। भूतपीठकल्पने आद्येष्टकान्यासलोपे भूतदैवत्यवैष्णवहोमौ कृत्वा भूतयक्षपिशाचनागहोमाः कार्याः। चतुर्वेदादिमन्त्रैश्चतुरिष्टकाः स्थाप्याः। तत्राप्याद्येष्टकान्यासलोपे भूतमन्त्रवैष्णवमन्त्रैर्जुहुयात्। अधिवासोचितैर्मन्त्रैः पीठं संस्थाप्य वारिणा संस्नाप्य होमं पूर्ववत् कृत्वा चतुर्वेदादिमन्त्रान् चतुर्दिक्षु जपेत्।

परिवारालयानामाद्येष्टकान्यासलोपे उक्तहोमान् कृत्वा तत्तन्मन्त्रान् क्रमेण जपेत्। गर्भभाजने प्रमाणहीने अधिके वा सौरसौमाग्नेयहोमान् कुर्यात्। गर्भन्यासादिरत्नालाभे पावकं परिषिच्य तस्य दक्षिणतः पार्श्वे रत्नेशं विष्णुमर्चयेत्। अग्नीषोमीयहोमं कृत्वा अमृताश्मं गृहीत्वा तत्तद्द्रव्यमिति ध्यात्वा तत्तन्मन्त्रमुदीर्य तत्तद्ररत्नन्यासं कुर्यात्। सर्वरत्नालाभे हेम्ना रजतेन ताम्रेण वाऽङ्गुलीयकान् कारयेत्। सर्वधात्वलाभे पारदं समाहृत्य आत्मसूक्तश्रीसूक्तविष्णुसूक्तहोमपुरःसरं कर्माचरेत्। सर्वबीजालाभे यवमाहृत्य आत्मसूक्तादिहोमं कुर्यात्। वायुविष्णुसोमदैवत्यान् होमान्वा कुर्यात्। गर्भन्यासलोपे वैष्णवं विष्णुसूक्तं श्रीभूमिदैवत्यं च जुहुयात्। ततो विधिना गर्भन्यासं कुर्यात्। देवकार्यविहितद्रव्याणां लोपे द्रव्यदैवत्यं शैषिकं च हुत्वा द्रव्याणां प्रतिनिधिं सङ्गृह्णीयात्। मूर्धेष्टकान्यासलोपे आद्येष्टकान्यासलोपोक्तं प्रायश्चित्तं कुर्यात्। अङ्गहोमं च कुर्यात्। सुधावर्णादिलोपे विपर्यासे च विष्णुगायत्र्या होमः कार्यः। स्थूपिकीले तदाधारे च प्रमाणलोपे उक्तवृक्षालाभे च विष्णुसोमाग्निश्रीभूमिदैवत्यान् होमान् कुर्यात्।

परिवारालयानां गोपुराणां च मूर्धेष्टकान्यासलोपे वर्णलेपविपर्यये वैष्णवहोमःकार्यः। आलयादेस्त्वरया निर्माणे वास्तुहोमपर्यग्निकरणपञ्चगव्यप्रोक्षणपुण्याहवाचनानि कृत्वा स्नपनं च कृत्वाऽग्निदैवत्यं परिषद्धोममङ्गहोमं पारमात्मिकहोममीङ्कारादिहोमं वैष्णवहोमं

महाव्याहृतिहोमं च हुत्वा प्रतिष्ठोक्तक्रमेण तांस्तान् देवान् प्रतिष्ठाप्यान्तहोमं कुर्यात्। विमाननिर्माणे द्रव्यसङ्करे स्थानविपर्यासे च वैष्णवं तत्तत्स्थानाधिदैवत्यं च जुहुयात्। अनुक्ते देशे द्रव्यन्यासः कृतश्चेत् वैष्णवं विष्णुसूक्तं पुरुषसूक्तं श्रीभूमिदैवत्यं च हुत्वा तत्तत्स्थाने निवेशयेत्। मूर्धेष्टकाप्रमाणन्यूनतातिरेकयोराद्येष्टकावत्प्रायश्चित्तं कुर्यात्। स्थूपिशिलादिन्यासलोपे ध्रुवसूक्तेन एकामिष्टकां संन्यस्य तत्र रत्नानि न्यसेत्। दिक्षु चतस्र इष्टका न्यस्य मध्ये स्थूपिं प्रतिष्ठाप्य सुधया दृढं कारयेत्। विमाने समापिते कलशादिक्रिया न कृता चेत् शान्तिं जुहुयात्। कूटागारस्य विहितलक्षणलोपे महाशान्तिः कार्या। मासादूर्ध्वं कलशक्रियालोपे सुधालेपलोपे च वैष्णवविष्णुसूक्तपुरुषसूक्तश्रीभूमि-दैवत्याग्नेयभूदैवत्यहोमाः कार्याः।

द्वादशाब्दोपरि आलयनिर्माणसमाप्तिर्यदि न भवेत् तर्हि ग्रहयज्ञं विशेषेण ब्राह्मणभोजनं च कृत्वा कार्यारम्भं पुनः कुर्यात्। प्रथमेष्टकामारभ्य स्थूपिकीलपर्यन्तं संभवतामनुक्तानां सर्वदोषाणां शान्त्यर्थं वैष्णवं विष्णुसूक्तं पुरुषसूक्तं श्रीभूमिदैवत्यमङ्गहोमं च कृत्वा, स्थूप्याद्युपानपर्यन्तानि विमानाङ्गानि उद्दिश्य 'दद्भ्यः स्वाहा' इत्यादि हुत्वा, ब्रह्मरुद्रविनायकाग्निदुर्गाप्रजापतिदैवत्यान् होमान् कुर्यात्। होमान्ते तत्तन्मन्त्रांश्च जपेत्।

विमाने प्रस्तरेऽलङ्कारे च हीने आभ्यन्तरस्य द्वारस्यापि भित्तौ हीनेऽधिके न्यक्षादीनां चतुर्णां होमः कार्यः। अब्जहोमं रात्रिसूक्तं पुरुषसूक्तं शतवारं स्वस्तिस्वाहेत्यादि-दशमन्त्रांश्च जुहुयात्। विमाने वृक्षवल्लीतृणानां प्ररोहे सति वृक्षाधिदैवत्यहोमं कृत्वा गुरवे दक्षिणां दद्यात्। पश्चात् शिल्पिना नवीकरणं कारयेत्। प्राकारगोपुरविश्वक्सेन-भूतपीठकूपाराममहानसस्नपनालयास्थानमण्डपादिषु हीनेषु वैष्णवं विष्णुसूक्तं पुरुषसूक्तं श्रीभूमिदैवत्यं तत्तदधिदैवत्यं च जुहुयात्। अन्यथा वंशहानिः शत्रुवृद्धिरर्थनाशो महाभयं च स्यात्। द्वारस्तम्भभुवङ्गपतङ्गकवाटादिषु जीर्णेषु कृमिदुष्टेषु अग्निदग्धेषु तानि त्यक्त्वाऽन्यान्याहृत्य पूर्ववत्संयोज्याभ्युक्ष्य नित्याग्नौ वैष्णवं सौम्यमाग्नेयं च जुहुयात्। कवाटादिनाशे धात्रादिषड्दैवत्यं वैष्णवं श्रीभूमिदैवत्यं च हुत्वा पुनर्निर्मापयेत्।

आचार्यविपर्यासे मुनिहोमं कुर्यात्। आचार्यः कर्षणारम्भे यो वृतः तेन सर्वाः प्रतिष्ठान्ताः क्रियाः निर्वाह्याः। ततः परं नित्यनैमित्तिकानि कर्माणि च तेनैव निर्वर्त्यानि। उत्सवादिकर्मसु नान्यमाचार्यं वरयेत्। तदभावे तत्पुत्रं पौत्रं नप्तारं शिष्यं प्रशिष्यं वा तत्स्थाने गुरुं वरयेत्। स च गुरुः वैखानससूत्रेण निषेकादिक्रियान्वितः स्यात्। पुत्रपौत्रशिष्यादीनामप्यलाभे तु तदनुज्ञातपूर्वमन्यं युक्तमाचार्यं वरयेत्। अन्यथा यजमानस्य ग्रामस्य च विपद् भवेत्। सम्पद् विनश्येत्। आलये पूजा निष्फला भवेत्।

आचार्यऋत्विजां भर्त्सने शपने हनने सौम्यं रौद्रं वैष्णवं च हुत्वा तानुपास्यानुमान्यैव पश्चात् कर्माचरेत्। गुरोर्यजमानस्य च यदि कलहः सम्भवेत् तदा वैष्णवं ब्राह्मं भौतिकं च हुत्वा सुवर्णपशुभूम्यादि दत्वा तमनुमान्य पश्चात् कर्माचरेत्। आचार्यार्चकपरिचारगणानां परस्परविरोधे जाते आचार्ये कुपिते दीने सम्भ्रान्ते, आचार्ययजमानयोश्च विरोधे जाते वैष्णवं मुनिदैवत्यं वैष्वक्सेनं वासवं बार्हस्पत्यं च मन्त्रमष्टोत्तरशतं हुत्वा गुरुं प्रसादयेत्। गुरुरष्टोत्तरशतं प्रणवजपं कुर्यात्। प्रणवान्वितां व्याहृतिमष्टोत्तरशतं जुहुयात्। अर्चकस्यापीदमेव प्रायश्चित्तम्। तेषामन्यतमस्यापि यदि आत्मत्यागनिमित्ते साहसे प्रवृत्तिरभूत् तर्हि स प्रायश्चित्तं कृत्वा, एकभुक्तो नक्ताशी घृताशी पञ्चगव्यप्राशी तोयाशी उपवासी च दिनमेकं पृथक् पृथक् भूत्वा सप्तमे दिवसे स्नातो जपहोमौ कृत्वा ब्राह्मणान् भोजयेत्। यन्निमित्तं साहसे प्रवृत्तिरभूत् तस्याप्येवं प्रायश्चित्तं विधीयते। एवं प्रायश्चित्तमकृत्वा यदि पूजादि कर्म कृतं तर्हि प्रायश्चित्तावसाने देवदेवस्य भक्तितो द्विगुणमभ्यर्च्य द्विगुणं निवेदनं कार्यम्। कर्मकरविद्वेषे वैष्वक्सेनं जुहुयात्।

## २. बेरनिर्माणदोषप्रायश्चित्तम्

बालालयबेरस्य प्रमाणे तथा भूषणे लोपे यद्यपि दोषाभावः तथापि आत्मसूक्तजपपूर्वकं बालबेरं प्रतिष्ठाप्य अर्चयेत्। बेरनिर्माणार्थदारुसङ्ग्रहणकाले दुर्निमित्तदर्शने स्नात्वा महाशान्तिं हुत्वाऽष्टाक्षरमष्टसहस्रवारमावर्त्य सौदर्शनेनात्मानमभिमृश्य दक्षिणां दत्वा कर्मारभेत्। वृक्षस्यानिष्टदिक्पतने वृक्षान्तरालाभे महाशान्तिं हुत्वा तमेव

वृक्षमाहरेत्। प्रोक्तदार्वलाभे अन्यं याज्ञिकं वृक्षं गृहीत्वा तद्दैवत्यं वैष्णवं विष्णुसूक्तं च जुहुयात्।

दारुसङ्ग्रहे विपरीतं यदि भवेत् तदा यजमानो गुरुश्च स्नात्वा रात्रिसूक्तवैष्णव-विष्णुसूक्तविश्वजित्सूक्त होमान् कुर्यात्। शिलाग्रहणकाले दारुग्रहणकाले वा क्रियाहीने विपरीते च वैष्णवं विष्णुसूक्तं मिन्दाहुतिं विच्छिन्नं च व्याहृत्यन्तं जुहुयात्। प्रोक्तशिलाया अलाभे मेदिन्यादि दिग्दैवत्यं शान्तिहोमं च हुत्वा अष्टाक्षरमष्टसहस्रं जप्त्वा विष्णुमभ्यर्च्याञ्जनाभां शिलामाहरेत्। शिलायां गर्भदोषदर्शने विष्णुगायत्र्या होमं कृत्वाऽन्यां शिलामाहरेत्। शिलाग्रहणक्रियामकृत्वा बेरं सलक्षणं शिल्पिना कृतं चेत् वैष्णवं शान्तिं हुत्वा तद्बेरं भूमौ पिधाय शिलाग्रहणहोमं वास्तुहोमं च हुत्वा पर्यग्निपञ्चगव्याभ्यां संशोध्य तद्बेरं परितः शिलासंग्रहाङ्गबलिदानवत् बलिं दत्वा देवान् समाराध्य पश्चात् समन्त्रकं बेरं संगृह्य स्थापयेत्।

शिलाया दारोर्वा मुखं पार्श्वं दृष्टिमूर्ध्वमधः सम्यग् ज्ञात्वैव बेरं स्थापयेत्। अन्यथा राष्ट्रस्य राज्ञो यजमानस्य च महान् दोषो भवेत्। प्रजापीडा व्याधिर्मरणं च भवेत्। अतोऽब्जाग्नौ पुरुषसूक्तं विष्णुसूक्तमीङ्कारादिहोममङ्गहोमं पञ्चवारुणहोमं जयादीनां परिषद्देवानां च होमं कृत्वा विधिना स्थापयेत्। मन्त्रहीने मधूच्छिष्टक्रियाहीने ब्राह्मं प्राजापत्यं सौरं सौम्यं सारस्वतमाग्नेयं वैष्णवं च महाव्याहृतिसमन्वितं जुहुयात्। काष्ठमृद्रज्जुशर्कराम्बरवर्णादीनामुपादानद्रव्याणां योजनकाले क्रियाहीने विपर्यासे च शान्तिं हुत्वा देवमनुज्ञाप्य दक्षिणां दद्यात्। पक्षिश्वानर्हपशुकपिसूकरमूषकादिभिर्दूषितमृदाहरणे तां मृदं त्यक्त्वाऽन्यामाहृत्य भूमिपारमात्मिकेङ्कारादिवैष्णवान् जुहुयात्। बिम्बनिर्माणे स्नेहद्रव्यचूर्णकषायौषधिषु हीनेषु प्रयोगविपर्यासे च रज्जुबन्धाष्टबन्धमृदालेपनघटीशर्करालेपन-पटाच्छादनाभरणादिषु क्रमहीनेषु वर्णव्यतिक्रमे च वैष्णवं पौरुषं ब्राह्ममैन्द्रमाग्नेयं महाभूतदैवत्यं प्राजापत्यं च व्याहृत्यन्तं जुहुयात्। बेरे कृत्रिमं वर्णमज्ञानाल्लेपयेच्चेत् कपित्थनिर्यासेन युक्ताद्भिः क्षालयेत् वैश्वानरसूक्तं विष्णुसूक्तं ब्राह्मं वैष्णवं जयादिकं च

जुहुयात्। पश्चाद्यथोक्तवर्णेन लेपयेत्। बेरोक्तशूलानां तदुक्तं द्वित्रिचतुष्पञ्चषड्यवमानं हीनं चेत् ताम्रेण संपूरणं कृत्वा वैष्णवं पुरुषसूक्तं दद्भ्यःस्वाहेति अङ्गहोमं च जुहुयात्। रत्नानां सङ्कुले मन्त्रहीने वैष्णवं जुहुयात्। ध्रुवबेरार्थे शूलस्थापने विपर्यासे ब्राह्मं रौद्रं वैष्णवं पौरुषं च व्याहृत्यन्तं हुत्वा सहस्राहुतिं हुत्वा दक्षिणां दत्वा ब्राह्मणान् भोजयेत्।

शूलस्थापनलोपे ध्रुवस्थापनलोपे ध्रुवबेरलोपे वा आलये पिशाचावासः स्यात्। अतो वास्तुहोमं महाशान्तिहोमं च कुर्यात्। हिरण्यपशुभूम्यादीन् दद्यात्। आलयनिर्माणसमाप्त्यनन्तरमेकमासेऽतीते शूलस्थापनलोपस्येदं प्रायश्चित्तम्। द्विमासे तद्द्विगुणम्। एवं यावत्संवत्सरावधि वर्धयेत्। संवत्सरेऽतीते तु महाशान्तिहोमपुरःसरं ब्राह्मं रौद्रं वैष्णवं व्याहृत्यन्तं सहस्राहुतिं च हुत्वा हिरण्यपशुभूम्यादिदानं ब्राह्मणभोजनं च कारयेत्। आद्येष्टकादीनां तत्तन्मन्त्रं जप्त्वा हुत्वा च शूलं स्थापयेत्। यजमानविपर्यासे ऐन्द्रं रौद्रं च जुहुयात्।

शूलस्थापनोत्तरं ध्रुवबेरक्रियालोपे विष्णुसूक्तं विच्छिन्नं मिन्दाहुतिसहितं हुत्वा गुरवे भूमिं दद्यात्। एकमासेऽतीते एवम्। द्वितीये द्विगुणम्। यावत्संवत्सरावधि वर्धयेत्। संवत्सरेऽतीते आघारान्तं हुत्वा सहस्राहुतिं वैष्णवं विष्णुसूक्तं दिग्दैवत्यं च हुत्वा दक्षिणां दद्यात्। द्वितीये वत्सरे द्विगुणं कुर्यात्। द्वादशाब्दे व्यतीते तु कर्षणादीनि कारयेत्। कूष्माण्डं पञ्चवारुणं पारमात्मिकमीङ्कारान् अङ्गहोमं पुरुषसूक्तं विष्णुसूक्तं च हुत्वा विप्रान् भोजयेत्।

अर्धचित्रं महाबेरं मृण्मयं न कुर्वीत। स्वर्णरजतताम्रशिलादारुरत्नमयमनुमन्यते। इष्टकाकल्पितं ध्रुवबेरं सुधया अयुक्तं, नपुंसकवृक्षेण नपुंसकशिलया वा कृतम्, अयःपाषाणचूर्णलशुनहिङ्गुतैलाद्यैः संयुक्तं, पक्वमृण्मयं, शूलोपरि रज्जुबन्धहीनं, मृद्धीनं, घटीशर्कराकल्कहीनं, प्रमाणहीनमुक्तवर्णहीनं भूषणहीनं वा स्थापितं चेदाभिचारिकं भवेत्। तच्छीघ्रमपहाय वैष्णवं विष्णुसूक्तं पुरुषसूक्तं श्रीभूमिदैवत्यं यद्देवादीन् ब्राह्मं रौद्रमैन्द्रमाग्नेयं वारुणं सर्वदैवत्यं पारमात्मिकं च जुहुयात्। एषा महाशान्तिः सर्वदोषोपशमनी भवति।

लोहजं दारवं चार्धचित्रं निषिद्धमित्येके। अविधिकमलक्षण्यमयुक्तमप्रयोजकं विरूपं विवर्णं वा ध्रुवबेरं कल्पितं चेत् तत्त्यक्त्वाऽन्यत् प्रतिष्ठापयेत्। आघारं हुत्वाऽङ्गहोमं तदालयगतानां सर्वेषां च हुत्वा विष्णुसूक्तं ब्राह्मं पुरुषसूक्तं वैष्णवं पद्महोमं पारमात्मिकं च जुहुयात्। दक्षिणां दत्वा ब्राह्मणान् भोजयेत्। दैविके आर्षे च क्षेत्रेऽविधिकमलक्षण्यमप्रमाणमपि बेरं न दोषकरम्।

विमानं नवधामार्गे यन्मार्गेण कल्पितं, तन्मार्गेणाधिकेन वा ध्रुवबेरं कल्पयेत्। ततो हीनं न कल्पयेत्। आलयविपर्यासे बेरविपर्यासे शूलदारुविपर्यासे कल्पनादिविपर्यासे च ब्राह्मं विष्णुसूक्तं गारुडं सौम्यं प्राजापत्यं रौद्रं च सहस्रं जुहुयात्। ब्राह्मणान् भोजयेत्। शक्तितो दक्षिणां दद्यात्। बालालयबेरस्य प्रमाणादिलोपे आत्मसूक्तं जुहुयात्। ध्रुवरूपविपर्यासे मानहीने च महाशान्तिं त्र्यहं यजेत्। शैलजं ध्रुवबेरं वस्त्राभरणायुधोपवीतादि-संयुतं कुर्यात्। अन्यथाकृतं चेत् तदपहायान्यत् कारयित्वा वैष्णवं ब्राह्ममैन्द्रं विष्णुसूक्तं सौरं सौम्यं पुरुषसूक्तं च हुत्वा ब्राह्मणान् भोजयेत्।

जलाधिवासात् पूर्वं ध्रुवबेरस्याङ्गहानौ वैष्णवं विष्णुसूक्तं पुरुषसूक्तं श्रीभूमिदैवत्यं दद्भ्यःस्वाहादिकं च हुत्वाऽचार्यदक्षिणां दद्यात्। बेरं सम्यक् परीक्ष्यात्र सन्धानयोग्यं सन्दध्यात्। शक्तश्चेन्नूतनं बेरमाहरेत्। जलाधिवासात् पश्चादङ्गहानौ वैष्णवं विष्णुसूक्तं श्रीभूमिसूक्तं ब्राह्मं रौद्रं मुन्योर्मन्त्रं च हुत्वाऽङ्गहीनं सन्धायान्यद्वा बेरमादाय स्थापयेत्।

समाप्ते विमानेऽज्ञानाद्वाऽर्थलोभाद्वा ध्रुवबेरं विना कौतुकस्थापने तदाभिचारिकं भवति। ततो महाशान्तिं त्र्यहं हुत्वा ब्राह्मणान् भोजयित्वा क्षमस्वेति देवं प्रार्थ्य बालालये प्रतिष्ठाप्य ध्रुवबेरं वा ध्रुवार्चाबेरं वा स्थापयेत्। प्रतिष्ठाविध्यतिक्रमे सप्ताहं महाशान्तिं जुहुयात्। कौतुकबिम्बं सङ्कीर्णेनानुक्तेन वा लोहेन कृत्वा स्थापयति चेत् क्षिप्रं तदपहाय सौरं सौम्यमाग्नेयं गारुडमीङ्कारादीन् पारिषदं पौरुषं वैष्णवं श्रीब्रह्मरुद्रदैवत्यानि च व्याहृत्यन्तं जुहुयात्। दक्षिणां दत्वा ब्राह्मणान् भोजयेत्।

कौतुकं सुवर्णेन स्थितमासीनं वा कारयेत्। नैव शयानम्। दैविके आर्षे पौराणिके च क्षेत्रे यथा पूर्वं तथाऽऽचरेत्। अन्यथा दोषो भवति। कौतुकस्य ध्रुवानुरूप्यविपर्यासे प्रमाणहीनेऽन्यालयकृते नृपराष्ट्रविनाशाय भवति। तस्मात्तदपनीय त्रिरात्रं महाशान्तिं हुत्वा देवं स्थापयेत्। लोहगौरवं कुर्याच्चेदप्येवमाचरेत्। ध्रुवं कौतुकं वा शिलामयं वर्णयुक्तं कुर्यात्। अन्यथा विष्णुसूक्तं वैष्णवं ब्राह्मं जयादीनीङ्कारादीन् पारमात्मिकं च हुत्वा वर्णयुक्तं कुर्यात्। तावत्पर्यन्तं कौतुकात् तच्छक्तिं महाबेरे समारोप्यार्चयेत्। कौतुकादीनामलाभे सुवर्णं निक्षिप्य वैष्णवं विष्णुसूक्तं पुरुषसूक्तं वायव्यं दिग्दैवत्यं च जुहुयात्।

यद्यद् द्रव्यं ध्रुवबेरस्य तेनैव परिवारानपि कल्पयेत्। गरुडशान्तविघ्नेशानन्तदुर्गासरस्वतीनां शैलबेरं न दोषावहम्। अन्यांस्त्वन्यथा कुर्याच्चेदाभिचारिकं भवेत्। ततो ब्राह्मं सौरं सौम्यमाग्नेयं गारुडं पारमात्मिकं जयादिकं श्रीदुर्गादैवत्यमीङ्कारादींश्च हुत्वा ब्राह्मणान् भोजयेत्।

## ३. प्रतिष्ठादोषप्रायश्चित्तम्

यागशालायाः प्रोक्तप्रमाणलोपे आधिक्ये वा देशविपर्यये वा शय्यावेद्या अलङ्कारलोपे वा श्रीभूमिदैवत्यं देशाधिपदैवत्यं वैष्णवं विष्णुसूक्तं पुरुषसूक्तं च जुहुयात्। तोरणेषु प्रमाणहीनेषु द्वाराधिपदैवत्यं जुहुयात्। यागशालायां दर्भमालालोपे वैष्णवं यजेत्। अग्निकुण्डनिर्माणार्थमशुभदेशात् मृदं सिकता वाऽऽनीय वारुणं वैष्णवं च यजेत्। शिलादारुलोहलोष्टेष्टकादिभिरग्निकुण्डं कृत्वा वैष्णवं भौतिकं सावित्रं च जुहुयात्।

अग्निकुण्डमानदोषे ब्राह्मं सौम्यमाग्नेयमादित्यं च जुहुयात्। होमस्थानविपर्यासे वैष्णवं प्राजापत्यमाग्नेयं वारुणं च व्याहृत्यन्तं जुहुयात्। परिस्तरणदर्भाणां परिधीनां च दाहे नाशे भेदे च पुनस्तद्वत् संयोज्य महाव्याहृतिभिः मिन्दाहुत्या च जुहुयात्। आग्नेयं वैष्णवं च व्याहृत्यन्तं यजेत्। नित्याग्निकुण्डे सभ्याग्निस्थापनेऽकृते पूर्ववत्प्रायश्चित्तं कृत्वा श्रोत्रियागारतोऽग्निमाहृत्य निधायाघारं हुत्वा नित्यहोमं कुर्यात्। विहितदेश-

कालातिक्रमेण वास्तुहोमे कृते आग्नेयं वारुणं वैष्णवं प्राजापत्यं व्याहृत्यन्तं जुहुयात्। ऐन्द्रे वास्त ग्ग्निस्थापनं कृतं चेदैन्द्रं वैष्णवं च हुत्वा विप्रशतं भोजयेत्। एवमेवान्यदिक्स्थापने तत्तद्दिग्दैवत्यं वैष्णवयुतं हुत्वा विप्रभोजनं कारयेत्। यागशालायां श्वकाकादिप्रवेशे तत्कुण्डं व्यपोह्यान्यं कुण्डं कृत्वाऽऽघारं हुत्वा आग्नेयं वैष्णवं पञ्चवारुणं मूलहोमं च शतशो जुहुयात्।

अङ्कुरार्पणकाले ब्रह्मसोमादिदेवानामर्चनलोपे हविर्निवेदनलोपे च तत्तद्दैवत्यं वैष्णवं च हुत्वा पुनरभ्यर्च्य हविर्निवेदयेत्। अङ्कुरार्पणलोपे वैष्णवं विष्णुसूक्तं पुरुषसूक्तं ब्राह्मं सौम्यं व्याहृतीश्च हुत्वाऽङ्कुरार्पणं कर्तव्यम्। अङ्कुरार्पणोत्तरकर्मलोपे महाशान्तिं हुत्वा पुनरङ्कुरार्पणं कृत्वा कर्माचरेत्।

अक्षिमोचनात् पूर्वं पीठसंघातकर्मणि रत्नानामलाभे वैष्णवं विष्णुसूक्तं पुरुषसूक्तं ब्राह्मं सौम्यं व्याहृतीश्च हुत्वा तत्तत्स्थाने बहुशः सुवर्णं न्यसेत्। पुनः पीठसंघातं कुर्यात्। पीठसंघातकर्मणि मन्त्रलोपे शान्तिं हुत्वा तत्पीठं स्पृशन् मन्त्रं जपेत्। आग्नेयविधानेन केवलं शिल्पिना वा पीठसंघाते कृते कलशैः संस्नाप्य महाशान्तिं हुत्वा तत्तन्मन्त्रं जपेत्। पीठं विना केवलस्थले मूलबेरं स्थापितं चेत् देवं विशेषतोऽभ्यर्च्य क्षमस्वेति प्रणम्य कुम्भे देवमावाह्य पीठं कृत्वा तत्र देवमारोप्य शान्तिहोमपर्यग्नि पञ्चगव्यपुण्याहैः शोधयेत्। पुनः प्रतिष्ठां च कुर्यात्। नवाहं सप्ताहं पञ्चाहं त्रियहं वा विशेषतोऽभ्यर्च्य ब्राह्मणान् भोजयेदाचार्यदक्षिणां च दद्यात्। लौहबिम्बस्य पीठं प्रमादाद्यदि भज्यते तदा पूर्वन्यस्तानि रत्नानि पुनर्निक्षिपेत्। सप्तकलशस्नपनं कृत्वा महाशान्ति-पुरःसरं पीठं संयोज्य प्रतिष्ठापयेत्।

अक्षिमोचनलोपे कालातीते षण्मण्डलाधिदेवत्यं यद्देवादि ईङ्कारादीन् पारमात्मिकं पुरुषसूक्तं हुत्वाऽक्षिमोचनं कारयेत्। वर्ज्यकाले अक्षिमोचनं कृतं चेत् वैष्णवं विष्णुसूक्तं नवग्रहदैवत्यं च हुत्वा पुनरक्षिमोचनं कारयेत्। पीठसंघातं कृत्वैवाक्षिमोचनं कारयेत्।

अन्यथा तस्य शान्तये त्रियहं महाशान्तिं जुहुयात्। अक्षिमोचनकाले गवादिदर्शनद्रव्यलोपे गोदानसूक्तं तत्तद्द्रव्याधिदैवत्यं वैष्णवं च हुत्वा पश्चात् तत्तद् द्रव्यं दर्शयेत्। अक्षिमोचनकाले क्रियाहीने विपर्यासे मन्त्रहीने द्रव्यहीने सर्वत्रैव शान्तिं हुत्वा दक्षिणां दद्यात्। भूपरीक्षादि अक्षिमोचनान्तं यद्यत्क्रियालोपो भवति तत्तच्छान्तये तद्दिने महाशान्तिं हुत्वाऽऽरभेत।

अधिवासद्रव्यलोपे द्रव्याधिदेवान् विष्णुसूक्तं वैष्णवं च जुहुयात्। रत्नाभावे सुवर्णं, धात्वभावे पारदं, बीजाभावे यवं च संगृह्य, वैष्णवं-विष्णुसूक्तं, दिग्दैवत्यं-वैष्णवं, वायव्यं-वैष्णवं च जुहुयात्। पञ्चगव्यक्षीरोदकेष्वधिवासनलोपे वैष्णवमार्षं विष्णुसूक्तं च हुत्वा त्र्यहमेकाहं वा जलाधिवासं कारयेत्। अनधिवासितबिम्बस्थापने महाशान्तिं हुत्वाऽधिवास्य स्थापयेत्। अधिवासहोमलोपे रौद्रं ब्राह्मं वैष्णवं च जुहुयात्। हौत्रशंसने गोत्रवैपरीत्यं भवति चेत् तल्लोपो वा भवति चेत् आर्षं वैष्णवं ब्राह्मं प्राजापत्यमैन्द्रं रौद्रं पारिषदं सारस्वतं च जुहुयात्। सभ्याग्नौ शेषहोमलोपे वैष्णवमाग्नेयं व्याहृतीश्च जुहुयात्। अग्निप्रणयनवैपरीत्ये मन्त्रहीने च वैष्णवमाग्नेयं ब्राह्मं सौम्यं च हुत्वाऽग्निं प्रणयेत्। पश्चात्तदग्निषु आघारात्पूर्वतोऽन्तरा न गच्छेत्। गच्छन् तद्दिक्पालदैवत्यं वैष्णवमाग्नेयं च जुहुयात्। चरुं गव्यं नवनीतं च लौकिकाग्नौ पाचयित्वा पुनस्तत्तदग्निषु मन्त्रपूर्वकं संस्कुर्यात्। अग्निसंस्कारविपर्यासे जाते मन्त्राणां सङ्करे चाग्निं प्रज्वाल्य प्रणमेत्। अग्निसूक्तं च पठेत्। मथिताग्निनाशे पुनर्मथित्वाऽग्निं संगृह्याग्नेयं जुहुयात्। मथिताग्न्यलाभे आचार्यागारतः श्रोत्रियागारतो वाऽग्निमाहृत्य गार्हपत्याग्निकुण्डे निधायाघारं हुत्वा वैष्णवं भूमिदैवत्यमाग्नेयं च जुहुयात्।

तमग्निं वर्धयित्वा क्रमेणान्वाहार्ये आहवनीये आवसथ्ये सभ्ये पौण्डरीके च प्रणयनं कुर्यात्। आघारे कृते तस्मिन्नग्नौ अनुगते भस्मनि समिधमारोप्य लौकिकाग्नौ निधाय इन्धनानि प्रक्षिप्य प्रज्वाल्य परिषिच्य विच्छिन्नं मिन्दाहुती वैष्णवं व्याहृतीश्च यजेत्। अनुगतमग्निं समिध्यारोप्य लौकिकाग्नाववरोपणमेकः पक्षः। गुरुणा आत्मन्यारोप्य लौकिकाग्नाववरोपणमपरः पक्षः। स्रुगादीनामलाभे स्रुवेण वैष्णवं ब्राह्ममाग्नेयं सौम्यमादित्यं

च जुहुयात्। प्रोक्तसमिदलाभे पलाशाश्वत्थसमिधो हरेत्। ता एव तां तां समिधं ध्यात्वा आग्नेयं वैष्णवं ब्राह्ममार्षं च प्रायश्चित्तं जुहुयात्। दर्भान् कुशान् समिधश्च मासातीतान् वर्जयेत्। अन्यथा वारुणं वैष्णवं ब्राह्मं सौम्यमाग्नेयमादित्यं च प्रायश्चित्तं जुहुयात्। परिस्तरणकूर्चानां परिधीनामाज्यस्थाल्यादिपात्राणां स्रुवादीनां च प्रमाणहीने प्रतिहोमं मिन्दाहती सावित्रीं व्याहृतीश्च जुहुयात्। इन्धनमार्द्रं जन्तुकण्टकलेपयुतमग्नौ प्रक्षिपेच्चेत् तत्त्यक्त्वाऽन्यत् प्रक्षिप्याग्नेयं वैष्णवं व्याहृतीश्च जुहुयात्। उक्तद्रव्यलोपे कापिलेन घृतेन वैष्णवं यजेत्। पूर्णाहुतिं व्याहृतिं च जुहुयात्। उक्तद्रव्यलोपादिसमस्तदोषसंभवे तु पुनः प्रतिष्ठां कुर्यात्। दर्भपरिधिपुष्पसमिदक्षतानां लोपे वैष्णवं व्याहृतीश्च जुहुयात्। आजं माहिषं वा दधि क्षीरं गृहीतं चेत् वैष्णवं ब्राह्ममाग्नेयं सौरं च व्याहृत्यन्तं यजेत्। तैलादिस्नेहमिश्रं जलमिश्रं आजं माहिषं च घृतं नाहरेत्। तेन जुहुयाच्चेत् आसुरं भवेत्। तद्दोषशमनाय कापिलेन घृतेन तत्तन्मन्त्रं हुत्वाऽऽर्षं हुत्वाऽन्ते व्याहृत्या जुहुयात्। आज्यस्थाल्यां चरौ वा मक्षिकाकृमिरोमजन्तुपिपीलिकादीनां पाते तद् व्यपोह्यान्यद्रव्यमादाय प्राजापत्यमाग्नेयं वैष्णवं च जुहुयात्। आज्यालाभे तं दोषं व्यपोह्य दर्भैरुत्पूयो-द्दीप्याहरेत्।आहुतीनां विपर्यासे स्विष्टाकारं हुत्वा व्याहृतीर्जुहुयात्। यत्र यत्र प्रमादः स्यात् तत्र व्याहृतिहोमः प्रायश्चित्ततयाऽनुष्ठेयः।

न व्याहृतिसमो मन्त्रो होम्यमाज्यसमं च न।
न गायत्र्या समं जप्यं न दैवं केशवात् परम्।।

आहुतिविपर्यासे ब्राह्मं वैष्णवं च जुहुयात्। होमद्रव्यप्रमाणविरहे वैष्णवं जुहुयात्। होमद्रव्ये अस्पृश्यैः स्पृष्टे सप्तभिः कलशैः बिम्बं संस्नाप्य कौतुकादिकानपि स्नापयेत्। समिदाज्यचरुहोमेऽग्नेः पार्श्वज्वलने तत्तद्दिग्देवताहोमं कृत्वा वायव्यं वैष्णवं च जुहुयात्। वामावर्तज्वलने तु सौरमन्त्रैर्जुहुयात्। वामावर्ते विस्फुलिङ्गे कान्तिन्यूनतायामतीव वा विज्वलिते ब्राह्मं वैष्णवं व्याहृत्यन्तं हुत्वा ब्राह्मणान् भोजयेत्। समित्प्रक्षेपानन्तरमग्नेः सङ्कुले वायव्यं वैष्णवं च जुहुयात्। इध्मप्रक्षेपकाले यां दिशं प्रत्यग्नेः प्रच्यावो भवति तद्दिगीशमन्त्रैर्जुहुयात्।

यज्ञकर्मणि सर्वत्र अनुक्तप्रायश्चित्ते वैष्णवं विष्णुसूक्तं पुरुषसूक्तं च हुत्वा शंनोमित्रेति शान्तिं पुरुषसूक्तं वैष्णवं विष्णुसूक्तं च जपेत्। वैष्णवेन होमेन वैष्णवेन जपेन चैव सर्वयज्ञेषु न्यूनं सर्वं पूर्णं भवेत्। यतो विष्णुरेव यज्ञमूर्तिरिति श्रुतिराह। अनुक्तमखेऽध्वर्योः कार्याचरणे आर्षमन्त्रैः सप्तव्याहृतिभिश्च जुहुयात्। यं यं देवमुद्दिश्य प्रयोगे दोषः संभवति तद्दैवत्यमन्त्रैः प्रायश्चित्तं कुर्यात्। सर्वेषां होमानां विध्यतिक्रमे लोपे च वैष्णवं विष्णुसूक्तं पुरुषसूक्तमाग्नेयं च व्याहृत्यन्तं जुहुयात्। यज्ञोपकरणाभावे मन्त्राणां द्रव्याणां च विपर्यये ब्राह्ममाग्नेयं च जुहुयात्। चरूणां पुरोडाशानां विपर्यासे शान्तिहोमो ब्राह्मणभोजनं च कार्यम्। अन्तहोमे क्रियालोपे क्रियाद्रव्यादिसंकुले च पूर्णाहुतिं हुत्वा वैश्वानरसूक्तं जपेत्। ब्राह्मणान् भोजयेत्। उक्तयागस्थानाभावे स्थानानां संकरे च भूमिदैवत्यं जुहुयात्।

रात्रौ कुम्भस्थापनं महादोषकरम्। ततः सौरमाग्नेयं वैष्णवं च पृथक् पृथगष्टसहस्रं हुत्वा दिवैव स्थापयेत्। कुम्भप्रमाणलोपे, स्फोटकालादिदोषसत्वे, वस्त्रयुग्मरत्नायुधाद्यभावे च देवस्य सन्निधिर्न भवति। ततः पुरुषसूक्तं विष्णुसूक्तं वैष्णवं मुनिमन्त्रं ब्राह्ममाग्नेयं पारमात्मिकमीड्कारादि च हुत्वा ब्राह्मणान् भोजयित्वा गुरवे दक्षिणां दद्यात्। कुम्भपूजकेषु आचार्यादिषु भ्रमणचलननिद्रालस्य मोहक्रोधलोभाद्यनर्थदर्शने महाशान्तिं हुत्वा विप्रशतं भोजयित्वाऽन्यं गुरुं संगृह्य कर्मारभेत। साधिते कुम्भे भिन्ने वैष्णवं विष्णुसूक्तं पुरुषसूक्तं ब्राह्ममैन्द्रमाग्नेयमार्षं च हुत्वा विप्रान् भोजयित्वाऽन्यं कुम्भं स्थापयेत्। विष्णुगायत्र्या वा सहस्रं हुत्वा पुण्याहं वाचयित्वा आशीर्भिरभिनन्द्य द्वादशनिष्कं तदर्धं वा दक्षिणां दत्वाऽऽरभेत।

कौतुकादिबेराणां चतुर्दशकलशन्यासविपर्यासे वैष्णवं पङ्क्तीशदैवत्यं च जुहुयात्। स्नपनकाले बेरविपर्यासे पञ्चवारुणं वैष्णवं जुहुयात्। श्वानादिभिः पतितैश्चास्पृश्यैः कुम्भे स्पृष्टे तत्कुम्भं व्यपोह्यान्यं गृह्णीयात्। वैष्णवं ब्राह्मं सौरमाग्नेयं पुरुषसूक्तं विष्णुसूक्तं च जुहुयात्। चतुर्दश गा दद्यात्।। शयनाधिवासे वस्त्रे च्छेदादियुक्ते तत् त्यक्त्वाऽन्यदाहृत्य

श्रीदैवत्यं वैष्णवं च जुहुयात्। शयनाधिवासेऽण्डजादिपञ्चशयनालाभे प्रत्येकं वस्त्रमेव तत्प्रतिनिधिं ध्यात्वाऽऽस्तरेत्। वैष्णवं श्रीभूमिदैवताद्यं च यजेत्। कौतुकादिबेराणां शयनविपर्यासेऽपि वैष्णवं श्रीभूमिदैवत्यं च यजेत्। शयनस्थानविपर्यासे सौरं वैघ्नं सौदर्शनं वैष्वक्सेनं च जुहुयात्। शायितं बिम्बमर्कोदयात् प्रागुद्धरेच्चेत् देव्योर्मन्त्रान् वैष्णवांश्च चतुर्वारं जुहुयात्। पुनः शाययित्वा मुहूर्ते प्राप्ते स्थापयेत्। रात्रौ प्रतिष्ठापनं सर्वदोषकरम्। अत आग्नेयं वैष्णवं सौरं च हुत्वा दिवैव स्थापनं कुर्यात्। यथोक्तगुणहीनेन गुरुणा स्थापकादिभिर्वा स्थापितं बेरं गुणसंपन्नो गुरुः पुनः स्थापयेत्। त्रिरात्रं च महाशान्तिं जुहुयात्। अनुक्तपक्षनक्षत्रराशिषु स्थापने कृते एकाहं महाशान्तिं हुत्वा पुनः स्थापयेत्। भूपरीक्षादीनकृत्वा वा विनाऽचार्यं पदार्थिभिः त्वरिते वा कारयेच्चेत् अनुक्तनक्षत्रमासादौ वा स्थापयेत्तदा मासं पक्षं सप्ताहं पञ्चाहं त्र्यहं वा त्रिकालं महाशान्तिं जुहुयात्। तत्तन्मन्त्रजपं च कुर्यात्। भूपरीक्षादिपूर्वकं पुनः प्रतिष्ठां कुर्यात्।

बेरस्थापने स्थानवैपरीत्यं दोषावहम्। मध्यमं स्थानं ब्राह्मिकम्। तदनन्तरं दैविकम्। दैविकानन्तरं मानुषम्। भित्तिपार्श्वतः पैशाचम्। ब्रह्मस्थाने स्थापितं चेत् ब्रह्मक्षत्रविनाशनम्। मानुष्ये न रमेद्देवः। पैशाचे सर्वनाशनम्। दैविके स्थानकं यानकं च स्थापनीयम्। किञ्चिन्मानुषमाश्रित्य दैविके आसनम्। किञ्चिद्दैविकमाश्रित्य मानुषे शयनं च स्थापनीयम्। ऋजुदृष्टिं सौम्यदृष्टिं स्थापयेत्। अन्यथास्थापितं चेत् शान्तिं कुर्यात्। वैष्णवमीड्कारादीनि च हुत्वा ब्राह्मणान् भोजयेत्। ध्रुवस्य कौतुकस्य च यथोक्तं पीठं कल्पयेत्। अन्यथा तद्दैवत्यं तदालयगतसर्वदैवत्यं च हुत्वा ब्राह्मणान् भोजयेत्। ध्रुवस्थापनात्पश्चात् महाप्रतिष्ठायाः प्राक् अनुक्तसर्वदोषशान्त्यर्थं कापिलेन घृतेन वैष्णवं विष्णुसूक्तं श्रीभूमिदैवत्ये च व्याहृत्यन्तं जुहुयात्। ग्रामादौ वास्तुनाशे भूता इति मन्त्रेणाष्टोत्तरशतं जुहुयात्। बेरस्थापने विलम्बे जाते महाशान्तिं हुत्वा द्विजान् भोजयेत्। प्रतिष्ठायां विपर्यासशान्त्यर्थं सौरं होमं कुर्यात्। प्रतिष्ठाकाले रोदनरुधिरस्रावपतनमरणान्त्यजप्रवेशेषु महाशान्तिं हुत्वा ब्राह्मणान् भोजयेत्। ध्रुवबेरात्

कौतुकादिषु दीपाद्दीपमिवावाहयेत्। अज्ञानात् कुम्भजलेनावाहने कृते शीघ्रं शुद्धोदकेन इषेत्वोर्जेत्वेति स्नापयित्वा वैष्णवं विष्णुसूक्तं पुरुषसूक्तं च हुत्वा ध्रुवबेरादावाहयेत्।

कौतुकबिम्बावस्थाने वैपरीत्यं दोषावहम्। यदाकारं ध्रुवं कुर्यात् तदाकारं कौतुकम्। स्थानके स्थानकं कुर्यात्। आसने स्थानकासने । शयाने आसनं स्थानकं वा। कौतुकं शयानं नैव कुर्यात्। विपरीतं कृतं चेत् त्रयस्त्रिंशद् गणान् यजेत्। वैघ्नं सौरं गारुडं पाञ्चभौतिकं दुर्गासूक्तं श्रीसूक्तं विष्णुसूक्तं पुरुषसूक्तं च हुत्वा ब्राह्मणान् भोजयित्वा पुण्याहं वाचयेत्। यथोक्तं कौतुकं कृत्वा प्रतिष्ठापयेत्। ध्रुवबेरनाशेऽन्यत् सलक्षणं कृत्वा स्थापयेत्।

कौतुकबिम्बे स्नपने च स्फुटिते विवर्णे सुषिरसंयुते जर्ज्झरिते वाऽन्यबिम्बमादाय, पुरुषसूक्तं विष्णुसूक्तं वैष्णवं यद्देवादि ब्राह्ममैन्द्रं वायव्यं गारुडं महाव्याहृतीश्च हुत्वा, पूर्ववत् स्थापयेत्। बिम्बभेदने महाशान्तिं कुर्यात्। प्रतिष्ठितं बेरं प्रमादतः चलितं चेदपि पुनः प्रतिष्ठा कार्या। ध्रुवबेरचालने महाशान्तिं हुत्वा विप्रशतभोजनं सुवर्णदानं गोदानं च कृत्वा पुनः प्रतिष्ठा कार्या। अविधिज्ञैः स्थापितं बेरं क्षिप्रं चालयित्वा विधिज्ञैः पुनःस्थापयेत्। विधिज्ञैः स्थापितं चालितं चेत् शान्तिं हुत्वा पुनः स्थापयेत्। विमानं ध्रुवबेरं च महावातादिना चालितं चेत् तत्स्थाने तत्समीपे ग्रामादौ वा तस्माच्छतदण्डादूर्ध्वं विस्तीर्णे देशान्तरे वा विमानं नूतनं कृत्वा तद्बेरं स्थापयेत्। विमाननिर्माणसमाप्तिपर्यन्तं च तद्बेरमालयान्तरे यथालाभमर्चयेत्।

अन्यालये स्थापितं ध्रुवं कौतुकं वाऽज्ञानादन्यालये स्थापितं चेत् महा ान्तिं हुत्वा ब्राह्मणान् भोजयित्वा पूर्वस्थाने विधिना स्थापयेत्। अन्यालयादपहृतं शिलाबेरं भूमौ पिधायान्यद् बेरं स्थापयेत्। सप्ताहं महाशान्तिं कुर्यात्। स्थापिते महाबेरे मासादूर्ध्वं संस्कारलोपे वैष्णवं विष्णुसूक्तं पुरुषसूक्तं श्रीभूमिदैवत्यं ब्राह्मं रौद्रं पारिषदं च जुहुयात्। मासद्वयेऽतीते द्विगुणं, मासत्रये त्रिगुणमेवं संवत्सरान्तं वर्धयेत्। संवत्सरान्ते पुनः स्थापयेत्। द्वादशवर्षेऽतीते विमानस्य पुनः कर्षणादिसंस्कारं, बेरस्य शिलाशूलग्रहणादि

च सर्वं कृत्वा पुनः प्रतिष्ठां कारयेत्। स्थापिते महाबेरे अङ्गवैकल्यमस्ति चेत् तदपहाय शान्तिं कुर्यात्। अप्रमाणे विमानेऽप्रमाणं बेरमज्ञानात् स्थापितं चेत् महाशान्तिं कुर्यात्। नरवृषगजाद्यैर्बेरे उत्पाटिते तदहीनाङ्गं चेत् जलाधिवासं कृत्वा रत्नन्यासपूर्वकं पुनः स्थापयेत्। हीनाङ्गं चेत् भूमौ खनित्वा निक्षिप्य प्रच्छाद्यान्यद्बेरं स्थापयेत्। पञ्चगव्यप्रोक्षणं महासंप्रोक्षणं महाशान्तिं च विधाय पुण्याहं वाचयेत्। ब्राह्मणान् भोजयेत्। अध्ययनलोपे सारस्वतं जुहुयात्। अध्ययन-परिषद्देवार्चन-नृत्तगेयादिलोपे तत्तन्मन्त्रहोमः कार्यः। आचार्यादि-दक्षिणाकालातिक्रमे वैष्णवं मुनिमन्त्रं च अष्टोत्तरशतं हुत्वा दक्षिणां दद्यात्। अल्पदक्षिणाको यागो यजमानं हन्ति। यथोक्तभूरिदक्षिणः फलमनन्तं ददाति। ब्राह्मणानामन्नदानलोपे त्रियहं महाशान्तिमाचरेत्।

यागशालाप्रपादौ देवार्थं कल्पितं द्रव्यमग्निना दग्धं चेत् वैष्णवं ब्राह्मं सौरमाग्नेयं च जुहुयात्। कनकरजतताम्रशिलादारुमयानि बिम्बानि मुख्यानि। पूर्वं प्रतिष्ठितानि तानि विहाय गौणमन्यत् स्थापितं चेत् तदाभिचारिकं भवति। ततो विष्णुसूक्तं श्रीसूक्तं दुर्गासूक्तं पुरुषसूक्तं ब्रह्मसूक्तं रुद्रसूक्तं वैष्णवमङ्गहोमं विश्वजित्सूक्तं महाव्याहृतीश्च हुत्वा पूर्वतनं बिम्बमादाय स्थापयेत्। पञ्चमूर्तिप्रतिष्ठायां प्रत्येकं स्नपनादीनि सर्वाणि कुर्यात्। अन्यथा तत्तन्मन्त्रैस्तत्तद्धोमे सहस्रं जुहुयात्। क्रियाविपर्यास - बिम्बविपर्यास मन्त्रविपर्ययादि - सर्वदोषेषु वैष्णवं, मिन्दाहुतिं, नारायणायविद्महे, शंनोमित्रः, विष्णोर्नुकमित्यादिभिश्च होतव्यम्। होमान्ते सर्वशान्त्यर्थं वैश्वानरसूक्तं जपेत्। कर्मसमृध्यर्थं वैश्वानरं ध्यायेत्। अन्तर्यामी भगवान् पुरुषोत्तम एव यज्ञेश्वरः सर्वकर्मभिराराध्यः। स प्रीतः कर्मफलं दद्यात्। सर्वदोषेषु प्रायश्चित्तार्थं वैष्णवं विष्णुसूक्तं श्रीभूसूक्ते सौरमाग्नेयं च होतव्यम्। कर्षणादिप्रतिष्ठान्तेषु सर्वत्र दोषशमनार्थं विष्णुसूक्तं पुरुषसूक्तं यद्देवादि पारमात्मिकमीङ्करादि प्राजापत्यमैन्द्रमाग्नेयं सौरं सौम्यमङ्गहोमं वैष्णवं महाव्याहृतीश्च जुहुयात्। ब्राह्मणान् भोजयित्वा दक्षिणां गुरवे दद्यात्। पुण्याहं स्वस्ति च वाचयेत्। तटाकादिप्रतिष्ठां विना तज्जलोपयोगे कृते प्रायश्चित्तार्थं महाशान्तिं हुत्वा प्रतिष्ठां कारयेत्।

## ४. नित्यार्चनदोषप्रायश्चित्तम्

मार्जनलोपे वैष्णवं वारुणं वायव्यं शान्तं च जुहुयात्। निर्माल्यशोधनलोपे वैष्णवं वैष्वक्सेनं वारुणं च यजेत्। प्रोक्षणलेपनलोपे वायव्यं भूसूक्तं च जुहुयात्। मध्यरात्रे मार्जन्या देवालयमार्जनं कृतं चेत् श्रीसूक्तहोमः कार्यः।

अर्चकादीनां स्नानलोपेऽघमर्षणसूक्तमष्टशतं जप्त्वा हुत्वा मुनिमन्त्रं सावित्रीं च हुत्वा पुनः स्नानादिकं कृत्वा नित्यपूजां कुर्यात्। ऊर्ध्वपुण्ड्रादिहीने पाञ्चभौतिकमन्त्रान् जपेत्। हर्म्यप्रदक्षिणलोपे परिषद्वन्दनलोपे च वैष्णवं होतव्यम्।

अयुग्मप्रदक्षिणं कृत्वा पौरुषं वैष्णवं च सूक्तं जपेत्। युग्मप्रदक्षिणमेव कुर्यात्। अन्यथा पूर्वार्जितं पुण्यं नश्यति। आग्नेयनैर्ऋत्यवायव्यदिक्षु देववन्दनं न कुर्यात्। कृत्वा तु सहस्रशीर्षं पुरुषसूक्तं च जपेत्। क्षमस्वेति प्रणमेत्।

विमानं विष्णुरूपं स्यात्। तन्न पादादिना क्रमेत्। धामप्रदक्षिणे पूर्वं तत्र नमस्कुर्यात्। गोपुरस्य विमानस्य प्राकारस्यालयस्य च प्रमादाल्लङ्घने कृते शतं प्राणायामान् कुर्यात्। प्रातरर्कोदयात् पूर्वं, मध्याह्ने, सायम् अस्तमयात् पूर्वं च कवाटोद्घाटनं न कृतं चेत् शीघ्रमुद्धाट्याभिवन्द्य शान्त्यर्थं वैष्णवं सौरं द्वाराधिदैवत्यं श्रीभूसूक्तं च जुहुयात्।

अमन्त्रकं कवाटोद्घाटने कृतेऽपीमान् होमान् कुर्यात्। कवाटोद्घाटने अकृते कवाटमन्त्रेण रुद्रमन्त्रेण च जुहुयात्। देववन्दनहस्तताडनयोरकरणे वैष्णवं जुहुयात्। पात्रप्रक्षालनलोपे रविमन्त्रं जपेत्। जलपुष्पादि पूजाद्रव्यममन्त्रकमानीयते चेत् तन्मन्त्रं द्विगुणं जपेत्। अन्यसूत्रिभिरानीते त्रिगुणं जपेत्। ब्राह्मणालाभे क्षत्रियादिभिः शङ्खचक्राङ्कितभुजैः पर्वणिपर्वणि वापितनखकेशादिभिः शुद्धदन्तनखैः शुद्धाम्बरधरैः पूजाद्रव्यानयनं कारयेत्। पूजाद्रव्याधिदेवार्चनमकृत्वा पूजयेद्यदि, तद्द्रव्यदैवत्यं वैष्णवं व्याहृतीश्च जुहुयात्।

ऋषिच्छन्दोदेवतास्मरणलोपे मुनिमन्त्रं सर्वदैवत्यं ब्रह्मसूक्तं च जुहुयात्। मन्त्रेषु ऋषिच्छन्दोदेवतासु अविज्ञातासु 'अन्तर्यामी ऋषिः अनुष्टुप्छन्दः परमात्मा देवता' इति सामान्यतः स्मृत्वा पूजयेत्। पुण्याहे पञ्चगव्यप्रोक्षणे चाकृते वारुणं रौद्रं च हुत्वा प्रोक्षणं कुर्यात्। सम्बन्धकूर्चलोपे वैष्णवं मुनिमन्त्रं च हुत्वा कूर्चं न्यसेत्। अन्त्यवेलार्चनात् पूर्वं कूर्चस्य लङ्घनं न कार्यम्। कृतं चेत् ब्राह्मं वैष्णवं रौद्रं च हुत्वाऽर्चयेत्। देवस्य स्नपनलोपे वैष्णवं वारुणं च हुत्वा आपोहिष्ठादिभिः स्नापयेत्। स्नापनेऽशक्तौ मन्त्रेण कुशवारिभिः प्रोक्ष्य पूर्ववस्त्रादीनपोह्य धौतवस्त्रमर्पयेत्। नित्यं स्नानमशक्यं चेत् विष्णुपञ्चदिनेषु स्नापयेदिति केचिद् वदन्ति।

ध्रुवबेरपीठे पूर्वविन्यस्तपुष्पाणि संशोध्य पुष्पन्यासं कुर्यात्। तेनैव ध्रुवस्य नित्यार्चनं भवेत्। ध्रुवे पुष्पन्यासमकृत्वा कौतुकस्य नित्यार्चने कृते वैष्णवं विष्णुसूक्तं विष्णुगायत्रीं च हुत्वा तदैव पुष्पन्यासं कुर्यात्। धात्रादिपरिषदामर्चनलोपे तद्दैवत्यं वैष्णवं च हुत्वा पश्चात् परिषदोऽर्चयेत्। मार्कण्डेयभृगुब्रह्मशङ्करान् परिवारदेवान् यदि नार्चयेत् तदा तत्तन्मन्त्रैर्होतव्यम्।

बिम्बस्यार्चकेतरैः स्पर्शने शुद्धोदैरभिषेकः कार्यः। उच्छिष्टैरशौचवद्भिश्च विप्रैः स्पर्शने शूद्रस्पर्शनवत् प्रायश्चित्तं कार्यम्। क्षत्रियैः स्पृष्टे सप्तकलशस्नपनं कार्यम्। वैश्यसंस्पर्शे चतुर्विंशतिकलशस्नानं शान्तिहोमं ब्राह्मणभोजनं च कुर्यात्। शूद्रस्पर्शेऽष्टोत्तरशतकलशस्नानं महाशान्तिहोमो ब्राह्मणानां भोजनं च विहितम्। अनुलोमस्पर्शे शूद्रोक्तं प्रायश्चित्तम्। प्रतिलोमस्पर्शे जलादिष्वधिवास्य सप्ताहं महाशान्तिं हुत्वा पुनः प्रतिष्ठां कुर्यात्। तान्त्रिकस्पर्शेऽपि प्रतिलोमोक्तं प्रायश्चित्तम्। अवेदमूला वेददूषकाः समया हि तान्त्रिकाः।

अमन्त्रकार्चनमाभिचारिकम्। तद्दोषपरिहाराय ब्राह्मं वैष्णवं पुरुषसूक्तमेकाक्षरसूक्तं च हुत्वा विधिज्ञमाहूयार्चयेत्।

सर्पं दृष्ट्वा नरो यावत् कम्पते च मुहुर्मुहुः।
अमन्त्रमर्चकं दृष्ट्वा तथा भीतो जनार्दनः।।

मन्त्रस्खलने मूर्तिमन्त्रेण प्रणवादिना नमोऽन्तेनोपचारैरर्चयेत्। अष्टाक्षरमष्टोत्तरशतं जपेत्। अपराधक्षमां च प्रार्थयेत्।

धूपदीपाद्युपचारद्रव्यालाभे तत्तद्द्रव्यं स्मरन् कुसुमैस्तुलस्याऽक्षतेन वा मन्त्रेणोपचरेत्। पुष्पालाभे जलेनैव मन्त्रपूर्वमुपचरेत्। आसनाद्युपचारविपर्यासे वैष्णवं विष्णुगायत्रीं च जुहुयात्। तत्तद्देवतामन्त्रं वैष्णवं च जपेद्वा। सर्वोपचारविपर्यासे तत्तद्द्रव्यदेवतामन्त्रं विष्णुसूक्तं वैष्णवं च जुहुयात्। पुण्याहं वाचयेत् क्षमस्वेति देवं प्रणम्य पुनरर्चयेत्।

आसनावाहनादिसप्तमन्त्रासनोपचारविपर्यासे वैष्णवं विष्णुसूक्तं च जपेत्। जिह्वाग्रशोधनादिद्वादशस्नानासनोपचारविपर्यासे वायव्यं वारुणं सोमं सौरं वैष्णवं च जुहुयात्। उपवीतमुत्तरीयमक्षतं गन्धं पवित्रं चेति पञ्चोपचारसाङ्कर्ये दौर्गं सारस्वतं पौरुषं च यजेत्। पादुकाचामरादिदशालङ्कारासनोपचारविपर्यासे श्रीभूसूक्तं गारुडं षाण्मुखं रौद्रं च जुहुयात्। पुष्पगन्धधूपदीपोपचारेषु क्रमो यथारुचि कार्यः। अन्योन्यसङ्करेऽत्र दोषो न विद्यते। आदर्शाञ्जनवस्त्रार्घ्यदानस्तोमेति षट्सु विपर्यासे भौतिकं मुनिमन्त्रं च यजेत्। छत्रचामरनृत्तगीतादिषु विपर्यासे रौद्रं ब्राह्मं भूसूक्तं वैष्णवं च जुहुयात्। भोज्यासने हविर्निवेदनात् पूर्वं मधुपर्कं दद्यात्। तद्विपर्यासे अग्निमीळे ऋचं विष्णुसूक्तं वैष्णवं ब्राह्मं रौद्रं च जुहुयात्। हविर्निवेदनात् पूर्वं सर्वभक्ष्यं, परतोऽपक्वं च दद्यात्। तत्र विपर्यासे वैष्णवं गारुडमींकारादींश्च जुहुयात्।

स्नपनोत्सवबिम्बयोरभावे कूर्चं रुक्मं च न्यस्य समावाह्यार्चयेत्। आधावतोयविरहे गन्धविरहे च वारुणं गारुडं च यजेत्। शान्तपूजने स्वागतानुमाननलोपे विष्णुगायत्रीमुच्चार्य वैष्वक्सेनं यजेत्। देवस्य प्रातरावाहनलोपे गारुडं श्रीसूक्तं च जुहुयात्। देव्योरावाहनलोपे श्रीभूदुर्गासरस्वतीमन्त्रैर्जुहुयात्। अर्चायां ध्यानलोपे विष्णुसूक्तं जुहुयात्।

मन्त्रासनोपचारलोपे भौतिकं गारुडं विष्णुगायत्रीं वैष्णवं च जुहुयात्। पादुकार्पणलोपे वैष्णवं यजेत्। स्नानासनोपचारलोपे विष्णुगायत्रीं यजेत्। नीराजनलोपे रौद्रं वैष्णवं च होतव्यम्। प्लोतमार्जनलोपेऽभ्युक्षणलोपे च ऐन्द्रमाग्नेयं च मन्त्रं जपेत्। वस्त्रालङ्कारोपवीतपुष्पलोपे वैष्णवं विष्णुसूक्तं च जुहुयात्। गन्धलेपलोपे श्रीमन्त्रेण होतव्यम्। घण्टानादलोपे भेरीताडनलोपोक्तं प्रायश्चित्तम्। धूपदीपलोपे श्रीरुद्रसोम-मन्त्रैर्जुहुयात्। स्तोमारोपणलोपे वैष्णवं मुनिमन्त्रं च जुहुयात्। सन्ध्यारक्षणलोपे चक्रमन्त्रहोमः कार्यः। छत्रपिञ्छादिलोपे पाञ्चभौतिकं जुहुयात्। नृत्तगीतलोपे जयादिमन्त्रा उच्चार्याः। प्रमुखमण्डपलोपे तत्रालङ्कारलोपे हविःपात्रविरहे च तत्तद्दैवतमन्त्रहोमं कुर्यात्।

सन्ध्यादीपलोपे श्रीदैवत्यं वैष्णवमाग्नेयं च जुहुयात्। अर्चनाकाले अजस्रदीपनिर्वाणे द्विगुणं दीपं समुद्दीप्य सौरं रौद्रमाग्नेयं वैष्णवं च जुहुयात्। अर्चनान्यकालेऽजस्रदीपनिर्वाणे वैष्णवं विष्णुगायत्रीमाग्नेयं च हुत्वा द्विगुणमुद्दीपयेत्। अजस्रदीपात् सर्वेषां दीपानां दीपनं कार्यम्। अतस्तन्नाशे वैष्णवं विष्णुसूक्तं च जुहुयात्। अर्चनाकाले सर्वदीपनाशे देवं शुद्धोदकैः संस्नाप्य कुशोदकैरभिषिच्य अजस्रदीपनिर्वाणवत् शान्तिं हुत्वा द्विगुणं हविर्निवेदयेत्। आचार्याय दक्षिणां दद्यात्। दीपेषु बहुषु वर्तमानेषु एकस्य नाशो न दोषाय।

अर्चनाकाले यवनिकालोपे प्राजापत्यं वैष्णवं द्वारदैवत्यं व्याहृतीश्च जुहुयात्। देवं संस्नाप्याभ्यर्च्य निवेदयेत्। वेददूषकपाषण्डपापरोगिणां प्रतिलोमान्त्यजादीनां च दर्शने वैष्णवं ब्राह्मं रौद्रमाग्नेयं च व्याहृत्यन्तं हुत्वाऽर्चयेत्। शवदाहकपाषण्ड-प्रतिलोमगुरुनिन्दकवृत्तहीन षण्डाङ्गहीनाधिकाङ्गप्रच्छन्नबौद्धसमयानां वीक्षणं नैव कारयेत्। तान् प्राकाराद् बहिर्नीत्वा पुनरर्चनमारभेत्।

नित्यहोमलोपे वैष्णवं विष्णुसूक्तं पुरुषसूक्तं मिन्दाहुतिं च जुहुयात्। एककालं नित्यहोमलोपे द्विगुणमाचरेत्। त्र्यहे तल्लोपेऽग्निं मथित्वा वैष्णवविष्णुसूक्तपुरुषसूक्तहोमाः कर्तव्याः। प्रमादात् मूर्तिहोमे कपाले यदि जुहुयात् तदा वैष्णवं व्याहृतीश्च जुहुयात्। मूर्तिहोमलोपे मूर्तिमन्त्रं सवैष्णवं द्विगुणं जुहुयात्। मुनिहोमलोपे कालातीते विपर्ययेऽन्येन

सङ्करे वा वैष्णवं विष्णुसूक्तं पुरुषसूक्तं श्रीदैवत्यं ब्राह्मं रौद्रं व्याहृतीश्च हुत्वा मुनिमन्त्रेण जुहुयात्। नित्यहोमाग्नावनुगते भस्म समिध्यारोप्य मथितं लौकिकं वाऽग्निं तत्स्थाने न्यस्य समिधं तां निधायोज्ज्वाल्य परिषेचयेत्। मिन्दाहुती विच्छिन्ने वैष्णवं व्याहृतीश्च जुहुयात्।

देवस्य हविर्निवेदनलोपे श्रीभूसूक्तं ब्राह्मं प्राजापत्यं वैष्णवं पुरुषसूक्तं विष्णुसूक्तं च हुत्वा द्विगुणं निवेदयेत्। पक्वहविषोऽलाभे आमं निवेदयेत्। चरुणाऽग्नावधिदेवमनुं जुहुयात्। सिद्धस्य हविषो भागशो निवेदने वैष्णवं श्रीभूसूक्तं ब्राह्मं च हुत्वा हविः संसाध्य प्रभूतं निवेदयेत्। ग्रहणकाले तत्पूर्वमेव वा पक्वं हविर्यदि मोहान्निवेदयेत्तदा जगत् सर्वमाधिव्याध्याद्युपद्रवैः पीड्यते। अतो वैष्णवं विष्णुसूक्तं ग्रहमन्त्रांश्च हुत्वा देवेशं संस्नाप्य समभ्यर्च्य निवेदयेत्। उपदंशादिभिर्दध्ना घृतेन च हीनं हविर्निवेद्य सौम्यं वैष्णवं यजुराद्यं सामाद्यं च हुत्वा ऋगादिमन्त्रजपं कुर्यात्। अपक्वं शीतं पर्युषितं विकृतं दृष्टिदूषितमप्रोक्षितं च हविर्निवेद्य वैष्णवं श्रीभूमिदैवत्यमाग्नेयं वारुणं वायव्यं च होतव्यम्।

अनुलोमैः स्पृष्टं हविर्निवेद्याष्टचत्वारिंशत्कलशैः स्नापयित्वा महाशान्तिं हुत्वा प्रभूतं निवेदयेत्। प्रतिलोमपाषण्डपतितवेददूषकनास्तिकादिभिर्दृष्टं श्वकाकादिभिर्वा दृष्टं हविर्देवेशायानिवेद्यैव जले प्रक्षिपेत्। वैष्णवं विष्णुसूक्तं महाव्याहृतीश्च हुत्वैव हविरन्यन्निवेदयेत्। पाचकादन्यैः ब्राह्मणैः स्पृष्टं हविर्निवेद्य वैष्णवं सकृद्यजेत्। उच्छिष्टाशुचिभिर्विप्रैः क्षत्रियैर्वैश्यैर्वा स्पृष्टमन्नं निवेद्य देवेशं शुद्धोदैरभिषेचयेत्। वैष्णवं दशकृत्वो हुत्वाऽन्यद्धविर्निवेदयेत्। आशौचवद्भिर्विप्रैः शूद्रैरनुलोमजैर्वा स्पृष्टमन्नं निवेद्य देवेशं कलशैरधमाधमैरभिषिच्य शान्तिं हुत्वाऽन्यन्निवेदयेत्। प्रतिलोमैः स्पृष्टं निवेद्याष्टचत्वारिंशत्कलशैः संस्नाप्य महाशान्तिं हुत्वा प्रभूतं हविर्निवेदयेत्।

तुषकेशनखास्थिमक्षिकादिमत्स्यादियुतं हविर्निवेद्य तद्दोषशमनाय ईड्कारादीन् सर्वदैवतं वैष्णवं श्रीभूमिदैवत्यं च हुत्वा शुद्धस्नपनेन देवेशं पूजयेत्। ब्राह्मणान्

भोजयेत्। महाहविषि मक्षिकादिदर्शने तत्र पुरुषाशनमात्रं व्यपोह्य भस्मजलैः कुशेन आपोहिरण्यपवमानैः प्रोक्ष्य तन्निवेदयेत्। लोकधर्मविगर्हितानां निवेदने शान्तिं हुत्वा सप्तकलशैः संस्नाप्याचार्यः कृच्छ्रं चरेत्।

पूजामध्ये तीर्थप्रसाददानं पादुकाग्रहणं च नानुमतम्। अन्यथा शान्तिहोमं कुर्यात्। असंस्कृतं लेपकेशान्वितं जन्तुस्पृष्टं च ताम्बूलं निवेद्य वैष्णवं श्रीभूमिदैवत्यं च होतव्यं भवति। मुखवासलोपे श्रीमन्त्रं वैष्णवं च यजेत्।

पूजनार्थे जले पुष्पे च मन्त्रवत् संस्कृते सति ब्राह्मणादन्यैः स्पृष्टं चेत् तत्त्यक्त्वाऽन्यत्समाहरेत्। अथवा प्रोक्ष्य पात्रान्तरे निवेश्य पूर्ववन्मन्त्रसंस्कारं कृत्वा तेनैव पूजयेत्। उच्छिष्टाशुचिभिर्विप्रैराशौचवद्भिर्वा स्पृष्टं चेत् त्यक्त्वाऽन्यदाहरेत्। प्रतिलोमैस्तु स्पृष्टं दृष्टं च विसर्जयेत्। शूद्रैरशुचिभिः प्रतिलोमैरुदक्यया च स्पृष्टमाज्यं दधि क्षीरं मधु तोयं वा देवार्थं नैव गृह्णीयात्। सूतिकया दृष्टं न गृह्णीयात्। अज्ञानाद्यदि तानि देवदेवाय निवेदयेत्, शुद्धोदैः स्नपयित्वा शान्तिं हुत्वाऽर्चयेत्। एवं पुष्पफलादिकमपि स्पृष्टं त्याज्यम्। यदि लोभेन न त्यजेत् तदा शान्तिं हुत्वाऽभिषेचयेत्। वैष्णवमष्टशतं हुत्वा सप्तकलशैः संस्नाप्य प्रभूतं निवेदयेत्। अन्नबलेः प्रमाणलोपे वैष्णवं प्राजापत्यं च जुहुयात्। अन्नबल्यलाभेऽर्घ्यं पुष्पं वा बलिं दद्यात्। सौरं वैष्णवं च जुहुयात्। अन्नबलावावाहनं विना बलिभ्रमणे कृते वैष्णवं विष्णुसूक्तं पुरुषसूक्तं श्रीभूमिदैवत्यं च हुत्वा पश्चाद् बलिभ्रमणं कार्यम्। अन्नबलौ भूमौ पतिते भिन्ने जीर्णे च पूर्ववद् बलिमापाद्य वैष्णवं गारुडं प्राजापत्यं च हुत्वा प्रदक्षिणं कारयेत्। बलिधारकपतने गारुडं वारुणं वायव्यं बलिदैवत्यं व्याहृत्यन्तं हुत्वा कुर्यात्। स्त्रीशूद्रानुलोमादिकाकादिस्पर्शने सति बलिं जले विसृज्य सौरं ब्राह्मं गारुडं सौम्यमाग्नेयं श्रीभौम्यं वैष्णवं च जुहुयात्। पूर्ववद् बलिमाहृत्य बलिदेवं यजेत्। बलौ केशकीटादिदूषिते तत्त्यक्त्वा सौरं सौम्यमाग्नेयं गारुडं वैष्णवमार्षमाज्येन व्याहृत्यन्तं हुत्वाऽऽरभेत।

प्रोक्तबलिपात्रालाभे हविःपात्रं सङ्गृह्य तद्रूपं ध्यात्वा तदधिदेवं वैष्णवं च हुत्वा बलिमुद्धरेत्। बलिपात्रप्रमाणन्यूनतायां वैष्णवं पुरुषसूक्तं विष्णुसूक्तं पारमात्मिकमीङ्कारादि ब्राह्मं रौद्रं सौरमाग्नेयं पञ्चवारुणं जयादींश्च यद्देवादीनि कूष्माण्डं च जुहुयात्। बल्यग्रखण्डस्य शान्तायानिवेदने वैष्णवं मूर्तिमन्त्रं च हुत्वा विष्वक्सेनाय निवेद्य मुखवासनं प्रदाय पुनः बल्युद्धरणं कारयेत्।

मनुष्यमरणे ज्ञाते बलिभ्रमणं कृतं चेत् शान्तिं द्विजमन्त्रं च हुत्वा पुण्याहवाचन-पञ्चगव्यप्रोक्षणोत्तरं पुनर्भूतबलिं दद्यात्। ध्वजदेवं चार्चयेत्। बलिदानमकृत्वा हरेः पादोदकं प्रसादं च प्राश्य पुनर्द्विगुणमर्चयेत्। प्रातर्बलिलोपे वैष्णवं सौरं सौम्यं प्राजापत्यं च हुत्वा मध्याह्ने द्विगुणं कुर्यात्। सप्तभिः कलशैर्देवं स्नापयेत्। मध्याह्नेऽपि बलिलोपे सायं त्रिगुणं कुर्यात्।

एकाहबलिलोपे वैष्णवं विष्णुसूक्तं पुरुषसूक्तं दिग्दैवत्यं सौरं सौम्यं गारुडं च जुहुयात्। सप्तभिः कलशैर्देवं स्नापयेत्। सप्ताहबलिलोपे जलसम्प्रोक्षणं कुर्यात्। ब्राह्मणान् भोजयित्वा पुनर्बल्युत्सवं चरेत्। तदालयगतानां तत्तन्मन्त्रैर्हुत्वा पुनः शान्तिं समारभेत्। द्वादशाहेऽतीते महाशान्तिं हुत्वा देवेशं स्नापयेत्। पक्षबलिलोपे अङ्कुरार्पणपूर्वं देवेशं स्नपयित्वा कुम्भस्थापनपूर्वकं वैष्णवं सर्वदैवत्यं च हुत्वा सम्प्रोक्षणं कार्यम्। मासपर्यन्तं बलिलोपे वैष्णवं विष्णुसूक्तं पुरुषसूक्तं श्रीभूमिदैवत्यं ब्राह्मं रौद्रं दिग्दैवत्यं पारमात्मिकमीङ्कारादींश्च हुत्वा सप्तभिः कलशैर्देवं स्नपयित्वा महाहविर्निवेद्य बलिमुत्थापयेत्। त्रिमासपर्यन्तं बलिलोपेऽङ्कुरार्पणपूर्वकं महाशान्तिं त्रिरात्रं हुत्वा संप्रोक्षणं चरेत्। प्रायश्चित्तं हुत्वा बलिहीनाहस्सु यावान् बलिर्देय आसीत् तावन्तमादाय भूतपीठे विनिक्षिपेत्। वर्षेऽतीतेऽपि बलिलोपे पञ्चाहं महाशान्तिं हुत्वा शताष्टकलशैः स्नपनं कार्यम्। नष्टप्रमाणेनान्नेन प्रभूतं बलिमाहरेत्। क्षमस्वेति देवेशं प्रणमेत्।

अर्चनाङ्गेषु चान्येषु पदार्थेषु एवमेव दूषितेषु नष्टेषु वा तत्तदधिदैवतं सवैष्णवं हुत्वा पुनरन्यैः समर्चयेत्। तेषामलाभे सर्वेषां, पुष्पं तोयं च प्रगृह्य प्रतिनिधिं संकल्प्य तत्तत् स्मृत्वा समर्चयेत्।

अन्येषां क्रूरदेवानां यानच्छत्रचामरादिभिः वस्त्राभरणपुष्पैर्वा देवेशं नैवार्चयेत्। अन्यथा स्नपनं चरेत्। पूजाकाले बिम्बेऽङ्गवैकल्यं वर्णस्फुटित-मग्निदाहादि च यदि स्यात् तदा क्षिप्रं शान्तिं कारयेत्। वास्तुहोमं पर्यग्निं च कृत्वा आघारं हुत्वा घृताप्लुतैर्बिल्वपत्रैः पद्मैर्वा पारमात्मिकं विष्णुसूक्तं पुरुषसूक्तं च जुहुयात्। मूर्तिमन्त्रैस्त्रिरावर्त्त्याष्टोत्तरशतं यजेत्। पूजान्ते पूजकात् पूर्वमन्यस्तीर्थादिकं प्रसादं वा यदि गृह्णीयात् तदा तत्पूजा निष्फला भवेत्। महाशान्तिं हुत्वा पुनः पूजां कुर्यात्।

उक्तकाले द्वारबन्धनाकरणे, अकाले उद्घाटने वा तद्दोषशान्तये वैष्णवं विष्णुसूक्तं पुरुषसूक्तं सन्ध्याधिदैवत्यं च जुहुयात्। सकृद्बलिप्रदक्षिणलोपे प्रदक्षिणाधिक्ये च वैष्णवं गारुडं सौरं च हुत्वा भ्रमणं कारयेत्। बलिभ्रमणस्य विघ्ने जाते ब्राह्मं सौम्यं सौरं वैष्णवं गारुडं वैष्वक्सेनं च हुत्वा पुनरारभेत। बलिभ्रमणे देवस्य छत्राद्यलाभे वारुणं, चामरादीनामलाभे वायव्यं, दीपालाभे आग्नेयं वैष्णवं च, वाद्याभावे पुरुषसूक्तं, नृत्तगीताभावे विष्णुसूक्तं च हुत्वा घण्टाध्वनियुतं बलिभ्रमणं कुर्यात्। तत्काले शकुनसूक्तं स्वस्तिसूक्तं च जपेत्।

विधिवत् पूजनं कर्तुं ब्रह्माद्यैरप्यशक्यम्। किमुताव्यवस्थितचेतोभिर्मानुषैः? सर्वदोषप्रायश्चित्ताचरणं मासान्ते क्रियते चेत् द्वादश्यां श्रवणे वा स्यात्। तस्मात्तु दिवसात् पूर्वमङ्कुरार्पणमाचरेत्। पूर्वरात्रौ देवेशं विशेषतोऽभ्यर्च्य हविर्निवेद्य प्रतिसरं बध्वा शाययेत्। प्रातःसन्ध्यावसाने ग्रामप्रदक्षिणं कृत्वा स्नपनमण्डपेऽष्ट-चत्वारिंशत्कलशैः स्नापयित्वा महाहविः प्रभूतं वा निवेदयेत्। वैष्णवैः पुरुषसूक्तेन विष्णोर्नुकादिना जयादिभिः कूष्माण्डैः परिषन्मूर्तिभिश्च व्याहृत्यन्तं जुहुयात्। द्वादशाष्टाक्षराभ्यां चाष्टोत्तरशतं जुहुयात्। पूर्वोक्तैरेव मन्त्रैः पुष्पाञ्जलिं दत्त्वा क्षमस्वेति प्रणमेत्। आचार्यादिभ्यो दक्षिणां दद्यात्।

वर्षान्ते सर्वदोषप्रायश्चित्ताचरणं चेत् मार्गशीर्षमासे शुक्लद्वादश्यां भवेत्। तद्दिनात् पूर्वमङ्कुरानर्पयेत्। पूर्वरात्रौ नित्यार्चनावसाने वैष्णवं विष्णुसूक्तं पुरुषसूक्तं हुत्वा

विष्णुगायत्र्याऽब्जशतं बिल्वपत्रं वा घृताक्तं जुहुयात्। पारमात्मिकमींकारादींश्च जुहुयात्। देवेशं चतुर्दशकलशैरभिषिच्यालङ्कृत्य प्रतिसरं बध्वा शाययेत्। वैष्णवं श्रीभूमिदैवत्यं ब्राह्मं रौद्रं मुनिमन्त्रं सर्वदैवत्यं विष्णुसूक्तं च हुत्वा नृत्तगीतै रात्रिशेषं नयेत्। प्रभाते देवमुत्थाप्याष्टोत्तरशतकलशैः संस्नाप्यालङ्कृत्य विष्णुसूक्तेन पुष्पाञ्जलिं दत्त्वा सौवर्णं यज्ञसूत्रं संदध्यात्। अस्माकं नित्यार्चनादोषमशेषं क्षमस्वेति प्रणमेत्। प्रभूतं निवेद्यालयं प्रदक्षिणीकृत्यार्चयित्वा ब्राह्मणभोजनमाचार्यदक्षिणां च दद्यात्।

क्षमामन्त्रेण देवमेवं प्रार्थयेत् - अज्ञानादर्थलोभाद्वा मयाकृतमपराधं क्षमस्व। मज्जनैर्बन्धुभिर्वा कृतमपराधं क्षमस्व। आचार्येणार्चकेन परिचारकैर्भक्तैर्वा कृतमपराधं क्षमस्व। राज्ञा राजभृत्यैरमात्यैर्वा कृतमपराधं क्षमस्व। ग्रामणीभिर्वा गायकनर्तक-वादित्रवादकैर्वा कृतमपराधं क्षमस्व। यथाशक्ति मयार्पितं पत्रं पुष्पं फलं तोयं नैवेद्यं च स्वीकुरु। आवाहनं न जानामि, न जानामि विसर्जनम्। योनिसहस्रेषु येषु येषु व्रजाम्यहं तेषु तेषु त्वय्यच्युता भक्तिरस्तु मे। अशक्यं विधिवत् कर्तुं ब्रह्माद्यैरपि पूजनम्। किमुतास्माभिरल्पज्ञैः? अतोऽज्ञातानां ज्ञात्वा चानादृतानां दोषाणां शान्त्यर्थं सामान्यप्रायश्चित्तमिदं कार्यम् । सन्ध्यावसाने वैष्णवं विष्णुसूक्तं पुरुषसूक्तं विष्णुगायत्रीं द्वादशाष्टाक्षरौ च नमोब्रह्मण इत्यपि उच्चार्य पुष्पाणि पादयोर्दत्वा क्षमस्वेति प्रार्थयेत्। रात्रिपूजावसाने तु एकाक्षरादिसूक्तेन नारायणानुवाकेन च स्तुत्वा पुष्पाञ्जलिं दद्यात्। तस्मान्नित्यार्चनायां ये दोषाः समुद्भूताः अनया पूजया तेषां समेषां नः शान्तिरस्तु। उपचारापदेशेन कृतानहरहर्मया अपचारानिमान् सर्वान् क्षमस्व पुरुषोत्तमेति।

सर्वत्र च कर्मविपर्यासेषु पिष्टपशुयागः कार्यः। अत्रैवार्षिकं बीजमजं ब्रह्मवादिनो वदन्ति। अतो न प्रत्यक्षाजयाग आवश्यकः। शालिपिष्टमयमृत्विगुच्छ्रयमङ्गोपाङ्गयुतं पशुं कृत्वाऽभिमृश्य प्रोक्ष्य पुरुषसूक्तेन श्रृङ्गाक्षिशीर्षकर्णोदरपुच्छादिक्रमेण सर्वाङ्गानि छित्वा जुहुयात्। पश्चात् महाशान्तिं व्याहृत्यन्तं हुत्वा ऋत्विग्दक्षिणां दद्यात्।

प्रातःसन्ध्यार्चनलोपे मध्याह्ने द्विगुणं तत् कुर्यात्। वैष्णवं पुरुषसूक्तं विष्णुसूक्तं च यजेत्। प्रातर्मध्याह्नयोरर्चनलोपे सायं त्रिगुणं तत् कुर्यात्। सप्तभिः कलशैर्देवेशं स्नपयेत्। ब्राह्मणान् भोजयेत्। एकाहार्चनलोपे त्रिकालार्चां कृत्वा हवींषि निवेदयेत्। दक्षिणाग्नावाघारं हुत्वा वैष्णवैः पुरुषसूक्तेन विष्णुसूक्तेन श्रीभूमिमन्त्राभ्यां च हुत्वा ब्राह्मणान् भोजयेत्। द्व्यहार्चनलोपे द्विगुणमेवं कुर्यात्। एवं द्वादशाहपर्यन्तमर्चनलोपे दिने दिने एवमेव वर्धयेत्। पूजकोऽनशनं चरेत्।

उपावृत्तस्तु पापेभ्यो वसत्यात्मगुणैरिति।
उपवासस्त्वनशनं सर्वभोगविवर्जितम्।।

द्वादशाहे व्यतीते दक्षिणाग्नावाघारं हुत्वा वैष्णवं विष्णुसूक्तं पुरुषसूक्तं परिषद्देवमन्त्रांश्च शतंशतं हुत्वाऽष्टचत्वारिंशत्कलशैर्देवेशं स्नापयेत्। महाहविः प्रभूतं वा सम्यङ् निवेदयेत्। आचार्याय पशून् दत्त्वा विप्रांश्च भोजयेत्।

मासपर्यन्तमर्चनलोपे आहवनीयदक्षिणाग्निगार्हपत्यावसथ्याग्निकुण्डान् पूर्वादिदिक्षु कृत्वा आघारं हुत्वा परिषिच्य पुरुषसूक्तविष्णुसूक्तवैष्णवमूर्तिहोमान् चतुर्दिक्षु जहुयात्। देवीभ्यां मुनिभ्यां वैघ्नं गारुडं च महाव्याहृतिसहितं जुहुयात्। शताष्टकलशैर्देवेशं स्नपयेत्। पुण्याहं वाचयेत्। यावत्कालमर्चनं लुप्तं तावद् गुणयित्वा तावदर्चनद्रव्यं देवेशस्य निवेदयेत्। एवमेकमासे कुर्वीत। द्विमासे द्विगुणम्। एवं यावत्संवत्सरान्तं वर्धयेत्।

संवत्सरेऽतीते सहस्राष्टकैः शताष्टकैर्वा कलशैर्देवं स्नापयेत्। सुवर्णगोभूमिदानं च कुर्यात् सप्ताहं मासमेकं वा महाशान्तिं जुहुयात्। विष्णुगायत्र्या घृताक्तसहस्रकमलानि जुहुयात्। पुनः प्रतिष्ठां च कुर्यात्। लाजपिष्टेनाङ्गोपाङ्गसंयुतं पशुं कृत्वाऽलङ्कृत्याभिमृश्य प्रोक्ष्य पुरुषसूक्तेन तस्याङ्गानि क्रमेण छित्वा तैर्यजेत्। व्याहृत्यन्तं महाशान्तिं हुत्वा पुण्याहं वाचयेत्। द्वादशाब्दोपरि तु आलये भगवान् न तिष्ठति। पिशाचब्रह्मराक्षसादयो वसन्ति। तस्मात् सुवर्णहलेन कर्षणादीन् कृत्वाऽगारं नवीकृत्य वास्तुशुद्धिं कृत्वाऽब्जहोमं कुर्यात्। पुनः प्रतिष्ठां च कुर्यात्।

आवरणाद् बाह्ये पञ्चाशद्दण्डाभ्यन्तरे मनुष्यमृतिर्भवति चेत् शवोद्धरणात् पूर्वं देवेशस्यार्चनं हविर्निवेदनं च न कारयेत्। ध्रुवकौतुकयोः पुष्पन्यासमेव कारयेत्। पश्चात् कालातीते शान्तिं हुत्वा द्विगुणमर्चयेत्। शवोद्धरणात् पूर्वमज्ञानात् यद्यर्चनं हविर्दानं च कृतं तदा शुद्धोदैरभिषिच्य यद्देवाद्यैश्च हुत्वा समभ्यर्च्य निवेदयेत्।

गृहार्चायां प्रातःकालार्चनलोपे सायं द्विगुणमाचरेत्। एवमेवोत्तरत्र द्विगुणं वर्धयेत्। ब्राह्मणानपि भोजयेत्। द्वादशाहार्चनलोपे पुरुषसूक्तं विष्णुसूक्तं च हुत्वाऽभ्यर्च्य द्विगुणं निवेदयेत्। ततो मासप्रभृतिसंवत्सरावध्यर्चनलोपे सप्तकलशस्नपनं मूलहोमं च कुर्यात्। संवत्सरार्चनलोपे पर्यग्निपञ्चगव्याभ्यां शुद्धिं कृत्वा पुनः प्रतिष्ठां कुर्यात्। महाशान्तिं च सकृज्जुहुयात्। प्रतिलोमपतितवेददूषकाद्यैः बेरे स्पृष्टे सप्तकलशैः संस्नाप्य विष्णुसूक्तं पुरुषसूक्तं धात्रादिमूलहोमं यद्देवांश्च जुहुयात्। ब्राह्मणांश्च भोजयेत्।

### ५. स्नपनदोषप्रायश्चित्तम्

स्नपनकालेऽतीते महाशान्तिं जुहुयात्। नित्यस्नपनलोपे वैष्णवं विष्णुसूक्तं पुरुषसूक्तं वारुणं च हुत्वा द्विगुणैः कलशैः देवं स्नापयेत्। ग्रहणकाले देवस्य स्नपनेऽकृते पूर्ववत् प्रायश्चित्तं हुत्वा स्नपनं कारयेत्। काम्यस्नपनेष्वकृतेषु पूर्ववत् प्रायश्चित्तं हुत्वा शुद्धोदकैर्वा स्नापयेत्। सन्ध्याकाले नैमित्तिकस्नपने प्राप्ते नैमित्तिकं समाप्यैव नित्यपूजां कुर्यात्। अन्यथा वैष्णवं मन्त्रं शतवारं जपेत्।

स्नपने पूर्वरात्रौ प्रतिसरबन्धनं शयनं च न कृतं चेत् वैष्णवं श्रीभूमिदैवत्यं सौदर्शनं च हुत्वा तत्काले शयनाधिवासं हित्वा प्रतिसरबन्धनमेव कारयेत्। एकबेरे कौतुके च शयनं विना प्रतिसरबन्धनं सद्य एव कुर्यात्। शयनस्थदेवस्य प्रभाते प्रबोधनेऽकृते सौरं सौम्यं वैष्णवं व्याहृत्यन्तं हुत्वा बेरमुत्थाप्य प्रोक्ष्याभ्यर्चयेत्।

अङ्कुरार्पणपालिकादीनां प्रमाणे न्यूनाधिकतादोषशमनाय तद्देवतानां मन्त्रं वैष्णवं च यजेत्। पालिकानामभावे शरावेष्वङ्कुरानर्पयेत्। अङ्कुरार्पणलोपे वैष्णवं

ब्राह्मं वारुणं वैघ्नं पङ्क्तीशदैवत्यं सौम्यं शान्तं जयादिमूर्तिमन्त्रांश्च जुहुयात्। पद्मादिशुक्लपुष्पैः पालिकाः प्रपूर्य तान्यङ्कुरत्वेन भावयेत्। अङ्कुरार्पणानन्तरं स्नपनेऽकृते वैष्णवं सौम्यं श्रीभूमिदैवत्यं वैघ्नं च हुत्वा स्नपनं कारयेत्। अङ्कुरार्पणं विनापि स्नपनं कारयेदिति केचित्।

स्नपनमण्डपस्य प्रमाणे हीनेऽधिके वा सति वैष्णवं भौमं च जुहुयात्। स्नपने चालयस्योत्तरे शान्तिं, पूर्वे पुष्टिं, दक्षिणे मुक्तिं, पश्चिमे बलमीशाने सर्वाभीष्टं च प्रापयेत्। आग्नेये नैर्ऋत्ये वायव्ये च स्नपनं न कुर्यात्। अन्यथा तत्तद्दिक्पालहोमं वैष्णवं च जुहुयात्। पुनः स्नपनं च कुर्यात्। स्नपनमण्डपतोरणे दोषयुक्ते तत्तद्द्वारपालान् वैष्णवं च यजेत्। तोरणादिविपर्यासे तत्तदधिदैवत्यं, तेषां लोपे वैघ्नं वैष्णवं सौरं सौम्यं प्राजापत्यं सौदर्शनं च, पङ्क्तौ प्रमाणलोपे पङ्क्तीशमन्त्रं वैष्णवं पाञ्चभौतिकं च यजेत्। विमानपालको मित्रः पङ्क्तीश इति कीर्त्यते।

वेद्याः प्रमाणे न्यूनतायां भूमिमर्घ्यान्तमभ्यर्च्य प्रपायामथवा भूम्यां कूर्चं वासो वा न्यस्य स्नपनं कुर्यात्। श्वभ्रे प्रमाणहीने मेदिन्यादिहोमः कार्यः। श्वभ्रे पङ्क्तौ वा प्रमाणहीने अधिके च वैष्णवं श्रीभूमिदैवत्यं पङ्क्तीशमन्त्रं च जुहुयात्। कलशप्रमाणे न्यूनेऽधिके वा वैष्णवं ब्राह्मं सौरं सौम्यं वायव्यमाग्नेयं महाव्याहृतीश्च व्याहृत्यन्तं जुहुयात्। अन्यं सलक्षणं कलशं गृह्णीयात्। कलशे भिन्नेऽन्यमादाय वैष्णवं जुहुयात्। द्वादशाक्षरमष्टाक्षरं वाऽष्टसहस्रमावर्तयेत्। कलशे शूद्रादिभिः स्पृष्टे अन्यं कलशमाहरेत्। तं पूर्ववत् प्रपूर्य स्पृष्ट्वा वैष्णवं तद्दैवत्यं च शतं जपेत्। तद्दैवत्यं वैष्णवं ब्राह्मं च जुहुयात्। कलशसंकुले वैष्णवं व्याहृतीश्च यजेत्। कलशे श्वकाकादिस्पृष्टे शान्तिं वैष्णवं च जुहुयात्। अन्यं कलशं प्रपूर्याष्टाक्षरेणाभिमन्त्रयेत्।

स्नपनार्थं यथोक्तस्थानगतमृदलाभे यथालाभं प्रगृह्य भूमिदैवत्यं वैष्णवं ब्राह्मं च जुहुयात्। स्नपनद्रव्ये पर्वते प्रमाणहीने वैष्णवमाग्नेयं च जुहुयात्। पर्वतलोपे तत्तद्वर्णलोपे

चैवम्। स्नपनार्थं सर्वधान्यालाभे यवं प्रतिनिधिमाहरेत्। यथालाभं वा धान्यं संगृह्णीयात्। वायव्यं वैष्णवं ब्राह्मं च जुहुयात्। धान्यानां प्रमाणलोपेऽपि तथा। धान्यलोपे च तथा। स्नापनार्थे अङ्कुरालाभे दूर्वाङ्कुरमाहृत्य सौम्यं वैष्णवं गारुडं व्याहृतीश्च जुहुयात्। अष्टमङ्गलानां लोपे तत्तद्वर्णलोपे प्रमाणलोपे वा वैष्णवमैन्द्रं महाव्याहृतीश्च जुहुयात्।

स्नपनकूर्चादौ प्रमाणहीने वैष्णवं ब्राह्ममार्षं सौरं च जुहुयात्। पञ्चगव्यादिषु प्रमाणहीनेषु जलैः प्रधानकलशान् प्रपूर्य द्रव्याधिपमनुं वैष्णवं च जुहुयात्। प्राशनं प्रोक्षणं च यत्र पञ्चगव्यस्य विधीयते तत्र सर्वत्राप्ययमेव प्रायश्चित्तविधिर्ज्ञेयः। पञ्चगव्यस्य यथोक्तयोगलोपे रौद्रं वैष्णवं च यजेत्। पञ्चगव्ययोगे मन्त्रलोपे पाणिना स्पृशन् विहितं मन्त्रं द्विर्जपेत्।

स्नपनार्थे मध्वलाभे तोयं प्रतिनिधिं गृहीत्वा ऋग्वेदादिमन्त्रेण वैष्णवेन च हुत्वा स्नपनं कुर्यात्। गन्धोदकस्यालाभे न्यूनतायां वा तद्दैवत्यं वैष्णवं च जुहुयात्। अक्षतानामलाभे आर्षं वैष्णवं बाह्मं सौम्यं च जुहुयात्। फलानामपि सर्वेषामलाभे यथालाभं प्रगृह्य सौम्यं वैष्णवं व्याहृत्यन्तं यजेत्। कुशोदार्थे कुशालाभे दर्भाग्रान् निक्षिपेत्। आर्षं वैष्णवं ब्राह्ममैन्द्रं च जुहुयात्। रत्नोदकार्थे पञ्चरत्नानामलाभेऽमृतं रुक्मं च गृहीत्वा वैष्णवं विष्णुसूक्तं ब्राह्मं रौद्रं च यजेत्। जप्योदमन्त्रलोपे वैष्णवं शतं जपेत्। पुरुषसूक्तं विष्णुसूक्तं च जुहुयात्। स्नपनार्थे सर्वौषध्यलाभे शालितण्डुलमाहरेत्। आदित्यं वैष्णवं ब्राह्मं रौद्रं च व्याहृतिसंयुतं जुहुयात्। मन्त्रजपं च कुर्यात्। पुण्यपुष्पालाभे यथालाभं प्रगृह्य धातृमन्त्रं वैष्णवं च जुहुयात्। सर्वचूर्णलोपे औशीरं मौद्गमेव वा प्रगृह्य सौदर्शनं वैष्णवं च यजेत्। कषायार्थे द्रव्यालाभे अश्वत्थत्वचमाहरेत्। वारुणं वैष्णवं च यजेत्। सर्वतीर्थानामलाभे नादेयं तीर्थमाहरेत्। गाङ्गेयं वैष्णवं व्याहृतीश्च जुहुयात्। गन्धानां सर्वेषामलाभे चन्दनमाहरेत्। ऐन्द्रं वैष्णवं व्याहृत्यन्तं जुहुयात्। प्लोतालाभेऽन्यवस्त्रेण परिमार्जयेत्। त्वाष्ट्रं वैष्णवं विष्णुसूक्तं च होतव्यम्।

मूलगन्धालाभे दूर्वामाहरेत्। ब्राह्मं वैष्णवं प्राजापत्यं च होतव्यम्। सर्वधातूनामलाभे जातिहिङ्गुलिकं वा ग्राह्यम्। दौर्गं विष्णुसूक्तं च होतव्यम्। पाणिपादतलौष्ठेषु जातिहिङ्गुलिकम्। भूषणाम्बरयोर्हरितालं मनःशिला च। सर्वाङ्गेषु पक्ष्मणोर्द्वयोर्वाऽञ्जनम्। नयनयोर्मुखे सर्वत्र वा गोरोचनम्। एवं धातुभिर्यथास्थानमलङ्कुर्यात्। विपर्यासे दौर्गं वैष्णवं च यजेत्।

द्वादशवस्त्रालाभे वैष्णवं श्रीदेवत्यं च हुत्वाऽष्ट चत्वारि वाऽऽच्छाद्य स्नपनं कारयेत्। भूषणानामलाभे षाण्मुखं वैष्णवं च यजेत्। स्नपने प्रतिद्रव्यार्चनलोपे नित्यार्चन इव प्रायश्चित्तं कुर्यात्। द्रव्याणां कलशानां च स्थानसङ्करे द्विगुणं देवमाराध्य यथास्थानं निवेशयेत्। द्रव्ये विपर्यासेनोद्धृते तद्दैवत्यं वैष्णवं च यजेत्। तेन द्रव्येन स्नपनं न कार्यम्। कृतं चेत् संशोध्य शुद्धोदकैः स्नापयेत्।

आजेन माहिषेण वा घृतेन स्नपनं न कार्यम्। अन्यथा पुरुषसूक्तं विष्णुसूक्तं पारमात्मिकमींकारादीन् अङ्गहोमं च जुहुयात्। सामवेदादिमन्त्रेण शताष्टमपि जुहुयात्। पञ्चगव्यैश्च स्नापयेत्। दध्नि दोषयुक्ते गृहीते वैष्णवं यजुरादिकं महाव्याहृतीश्च व्याहृत्यन्तं जुहुयात्। क्षीरे दोषयुक्ते षण्मन्त्रैर्वैष्णवैः शन्नो देवीरिति मन्त्रेण च यजेत्। स्नपनद्रव्यस्य श्वाद्यशुचिस्पर्शे तद्द्रव्यमपनीयान्यदाहरेत्। पञ्चगव्यकुशोदकैश्च स्थानशुद्ध्यै प्रोक्षयेत्। घृते कृमिकीटादिदर्शने वस्त्रेणोत्पूयोद्दीप्य प्रोक्ष्य अतोदेवादिमन्त्रैरभिमृशेत्। सामवेदादिमन्त्रेण वैष्णवेन च यजेत्। स्नपनद्रव्येषु कृमिकीटादिपतने तत्त्यक्त्वाऽन्यद् गृहीत्वा वैष्णवं द्रव्याधिपदेवं च जुहुयात्।

स्नपनार्थद्रव्येऽग्निदग्धे आग्नेयं वारुणं सौम्यं वैष्णवं च हुत्वाऽन्यान्याहरेत्। द्रव्याणां सङ्करे वैपरीत्ये तत्तदधिदेवार्चनलोपे मन्त्रसङ्कुले मन्त्रलोपे चाष्टोत्तरशतं वैष्णवं यजेत्। स्नपनोक्तद्रव्यालाभे तत्तत्प्रतिनिधिं गृहीत्वा तत्तद्द्रव्याधिपं वैष्णवं च जुहुयात्। हारिद्रस्नान शङ्खपद्मसहस्रधारास्नानलोपे पुरुषसूक्तं विष्णुसूक्तं वैष्णवं सौदर्शनं विष्णुगायत्रीं च यजेत्। स्नपने वस्त्रलोपे श्रीमन्त्रैर्वैष्णवैश्च यजेत्। आचार्यं वस्त्रैः

पूजयेत्। विष्वक्सेनार्चनलोपे वैष्णवं वैष्वक्सेनं च जुहुयात्। पङ्क्तीशार्चनलोपे तन्मन्त्रं जयादींश्च जुहुयात्। इन्द्राद्यर्चनलोपे इन्द्रादिमन्त्रं वैष्णवं च जुहुयात्।

स्नपने संभवतां सर्वदोषाणां शान्त्यर्थं पुरुषसूक्तं विष्णुसूक्तं पारमात्मिकमीङ्कारादि श्रीसूक्तं रात्रिसूक्तं दुर्गासूक्तं पञ्चवारुणं जयादीन् वैष्णवांश्च यजेत्। स्नपनादौ तैलाभ्यङ्गः कृतश्चेत् स्नपनमासुरं स्यात्। शुद्धोदैः संस्नाप्य क्षमस्वेत्यभिपूज्य महाशान्तिं हुत्वा ततः स्नपनं कुर्यात्।

प्रमादान्निद्राद्यैर्बिम्बे पतिते पञ्चगव्यैः संस्नाप्य प्रोक्ष्य सुवर्भुवर्भूरिति बिम्बस्य मूर्ध्नि नाभौ पादे च स्पृष्ट्वा वैष्णवं हुत्वा श्वभ्रे स्थापयेत्। देवीभ्यां सह देवेशस्य स्नपनमासुरम्। शान्तिहोमान्ते पृथक् स्नापयेत्। स्नपने कृमिकीटपतङ्गाद्यैर्बह्वन्ने दूषिते द्विप्रस्थं चरुमुद्धृत्य भस्माद्भिः मन्त्रतः प्रोक्ष्य दर्भोल्कया दग्ध्वा घृतमास्राव्य पश्चान्निवेदयेत्।।

सारसङ्ग्रहीतारौ

**आचार्यः लक्ष्मीनरसिंहभट्टः**

**आचार्यः हयवदनपुराणिकः**

# Vaikhānasa Āgama Kośa
## Volume - X

*Summary of the*

# 9. Prāyaśchitta Prakaraṇam
## Part I

### 1.Atonement for defects in Temple-Construction

Prāyaḥ means defect; Cittam means its removal. Whatever defects take place due to mistake in ritual act or due to incapacity or due to unseen reason, the atonement, thereof is possible to be done with the help of recitation of chants, offering of oblation etc. That is called expiation or atonement. It is essential for achievement of the desired fruit of ritual acts. Just as the cure of disease is achieved by medicine, likewise the cure or pacification of the flaws, like deficiency of excess or omission during performance of rituals is to be done with the help of atonement. At the time of ritual procedure, in case there is a vision of inauspicious omens, such as earthquake etc., even though the defects are already indicated, it is necessary to perform atonement by conducting fire-oblation etc. By mistaken ritual, the fruit in the form of peace, happiness and prosperity which is desired would not take place. On the contrary, some mishap, in the form of famine, epidemic or danger from enemy, thieves etc.,

would occur in the country. Therefore, in respect of Vedic rituals, whenever there is distortion of ritual or distortion of the doer or lapse of Mantras, lapse of material or miscalculation of time and also shortage or excess in ritual performance, and also undesirable admixture of procedure, and in all such cases, pacificatory atonement rituals have been prescribed in Āgamic lore.

In respect of the ritual of soil-testing etc., if seed-sowing for sprouts is not done, then, he should perform fire-fumigation with the Mantras pertaining to six Gods Brahmā etc., Mantras pertaining to Viṣṇu as well as the iconic Mantras pertaining to the presiding deities of the earthen vessels; Pālikā etc., and the Mantras pertaining to the attendants: Jaya etc. Then, after offering of sprouts, the priest should conduct respective ritual acts. In the event of lapse of special worship, the priest should offer worship two times. At the time of sprout offering, he should perform special worship on the service-idol. In respect of the idols which are part of other shrines, for the sake of festival etc., when sprouting is provided, the special worship is to be done to the stationary idol only. Fire-fumigation is to be performed with the chants, pertaining to the image of Paṅktīśa, in the event of lapse of dimension of the row.

In the case of rituals, preceded by sprout-offering, if the sprout-offering is to be done instantly, then on previous night, Adhivāsana may be done, in advance, on previous night alone. Thereafter, having performed eye-opening rite, the priest should

conduct the rituals, such as Vāstu-Homa etc. In case, adequate time is not obtained even within two days, then, having performed sprout offering, the rituals like eye-opening etc. should be conducted.

At the time of exit from outer door, for the purpose of soil-testing; if some obstacle occurs, then having performed pacificatory fumigation, the priest should recite the chant pertaining to Viṣṇu, one hundred times. He should also recite Vighna-Mantra (obstacle-remover chant), one hundred times. At that time, if some evil utterance happens to be heard, the priest should recite the chant pertaining to Sarasvatī and proceed after meditating over God. In case of eruption of quarrel or blood shade or fire-burn, the priest should perform the fumigation in mundane fire, with the help of chants pertaining to Viṣṇu, Soma, Viṣvaksena, Sudarśana, or Garuḍa. He should also recite the chant, pertaining to Vaiśvānara fire. On the occasion of soil-testing if some bad omen takes place, he should perform fumigation with Vaiṣṇava chants, Viṣṇu-sūkta and Puruṣa-sūkta and thereafter he should repeat Viṣṇu Gāyatrī as well as Sāvitrī hymns, eight hundred times. Then he should repeat Śākuna-sūkta and Svasti-sūkta, ten times.

In the event of lapse of soil testing and also the lapse of order of ploughing-rite or lapse of finding prescribed food-grain, or lapse of plough or in absence of feeding the herd of cows with fodder, the priest should conduct Homa by reciting Saumya and

Vaiṣṇava hymns and conduct each ritual, afresh. In the event of breakage of fire at the time of soil-testing, having performed Homa by chanting Saumya and Vaiṣṇava hymns, the priest should offer oblation into mundane fire, while reciting the hymns pertaining to Sudarśana and Varuṇa.

For the lapse of feeding the maidens, fire fumigation with chants pertaining to Durgā is to be performed. In the event of breakage of the lamp held by a maiden as well as in the event of falling down of lotus, fire fumigation by chanting Śrī-sūkta is to be performed. In the event of erosion of earthen soil the priest should offer full oblation as well as offer Mindāhuti and recite Bhū-sūkta. In the event of conducting ploughing without undertaking soil examination, then after performance of fumigation with the recitation of Bhū-sūkta, the priest should carry out ploughing right after conducting soil test. In case, sacrifice addressed to Viṣṇu has begun without completion of soil-test, then after having offered one thousand oblations into fire and after conducting sacrifice addressed to Bhūmi and after offering fire oblations addressed to spirits, the priest should donate four bulls by way of alms (to Brahmins). Initially, adoration of Ganeśa is to be done. In the event of soil-testing, being untimely conducted, or if either laspe of ritual or distortion thereof has been conducted either by tillers or seed-sowers, the priest should perform the prescribed Homa, two times and then worship the god. In lapse of that ritual, he should perform Homa by offering oblations, hundred times alongwith that chant.

In the event of non-availability of prescribed tree for preparation of yokes etc., the priest should perform fire-fumigation addressed to Earth, Viṣṇu, Rudra and the deities pertaining to oneself; and he should offer alms. Having worshipped the Lord, the priest should deck the Lord with gold ornaments. In the event of non-availability of prescribed trees for preparation of ploughs etc., or in case of lack of proportion, the priest should perform fire fumigation addressed to Viṣṇu, Soma, Agni and Prajāpati. Then he should adore the presiding Lord of trees. Thereafter, having prepared ploughs etc., with gold, he should carry out the ritual. In the event of lapse of proportion of yokes etc., the priest should conduct fire-fumigations addressed to Viṣṇu, Prajāpati, Yama and Rudra. In case the pair of bulls are wanting in limbs, then fumigation is to be conducted with the chants pertaining to Viṣṇu, Brahmā, Garuḍa, Prajāpati, spirits, seers, etc.; then he should bring two other bulls. At the time of ploughing, if the bull is wounded due to fault, then fire-fumigation is to be conducted with the help of the two hymns; Viṣṇu-sūkta and Puruṣa-sūkta. Thereafter Mindāhuti is to be performed. Then he should offer alms to the preceptor in the measure which is more than one Niṣka of gold. At the time of ploughing, if the bull gets sleep or is fainted, confounded, baffled or falls down or starts crying, then the priest should perform fumigation with Viṣṇu Gāyatrī and offer alms. In the event of lapse of worship of two deities; Viṣvaksena and Anapāyin, the fire oblation addressed to Viṣṇu as well as the fire-fumigation

addressed to Viṣvaksena and Anapāyin respectively should be performed. Even in the cases of lapse of worship of Garuḍa, Sudarśana, and Amita that is Ganeśa etc., the fire-fumigation addressed to that individual deity has to be performed. The fire-fumigation is to be performed, respectively with Varuṇa-mantra, in the event of breakage of the rope, with Śrī-mantra in the event of Earth-cleavage and with the chant addressed to Goddess Jyeṣṭhā, in the event of crack developed in sickle. At the time of ploughing if Yokes etc. are crakced, then the priest should perform Homa by chanting the mantra: *ato deva* etc. and the hymns pertaining to Brahmā, Prajāpati, Garuḍa and Bhūtas and give alms in terms of silver. At the time of ploughing if the plough etc. are broken or craked or if the rope is cut, the expiation is to be conducted on par with that prescribed for lack of dimenstion of plough. At the time of ploughing, if there is lapse of recitation of the Mantra, then the fumigation addressed to Viṣṇu, Rudra and Sarasvatī is to be performed. In case such items as scull, bone, chaff, hair, ant-hill or admixture of mud etc., is noticed, then having removed that and having sprinkled the land with five cow products, the priest should perform fire-fumigation addressed to Soma, sacred Fire and Viṣṇu. He should also perform fumigation addressed to Earth as well as fumigation addressed to Vāstu. The priest should offer alms in the form of food grains, to the Brahmins, after serving food crop to the herd of cows after performance of Homa-rite, pertaining to Soma and Viṣṇu, by way of normal expiation for removal of the defects, crept in soil-examination etc. By way of atonement of common defects

while soil-testing etc,. the priest should perform Homas addressed to Soma and Viṣṇu and then having offered grass to herd of cows, he should offer food-grains to Brahmins. In the case of lapse of ploughing or lapse of timely seed-sowing, Homa is to be performed while chanting the hymns pertaining to Rātri, Viṣṇu and Godāna. In the event of noticing hair, teeth etc. in the food-grains, the priest should discard all that and then sprinkle the seeds with holy ashses and offer oblation into Padma-fire while chanting Rātri-sūkta.

If some defect arises after the ritual of sowing seeds (for sprouting), the priest should sow the seeds again after the performance of Homa addressed to the land. If the presentation of herd of cows is omitted, then having performed Homa rituals named; Viṣṇu, Viṣvaksena, Garuḍa and Sudarśana, the priest should serve Palāla fodder to the herd of cows. In case there is lapse of prey-offering to the deities presiding over various grids of Vāstu-Maṇḍala diagram, the priest should worship with the prey-offering after performance of Homa rites pertaining to the deities; Viṣṇu, Brahmā, Vasu, Yama, Varuṇa and Kubera. If the rituals of [1]samurta, [2]haraka and stone collection are omited then then Homa is to be performed after rectiting Vaiṣṇava hymn and

1. Samurta: That rite is called samurta in which the wroship is conducted in miniature temple, and thereafter, the wise preceptor should instruct construction of main temple. (sa. 4. 35,6)

2. Haraka: That rite is called haraka, in which, main shrine, is constructed without constructing miniature temple. (sa. 4. 37)

Viṣṇu-sūkta, four times. If by mistake, undesirable admixture of ritual acts takes place, then Homa rite by chanting Vyāhṛtis is to be performed. If the priest happens to complete the ritual acts of soil-testing etc., and also of establishing first brick or stone slab and also ritual retention etc., in a single day and instantly in haste, then Homa rite has to be performed along with the recitation of Vaiṣṇava-sūkta Puruṣa-sūkta and Viṣṇu-sūkta. In case untimely ploughing is done then Bhūmi-Homa has to be conducted. In the cases of lapse of ploughing or lapse of timely sowing of seeds is done, then Homa-rite is to be conducted with the help of following hymns: Rātri, Viṣṇu and Godāna. In the event of omission of sowing of seeds, the priest should perform the sowing of seeds after conducting the Homa rites pertaining to Viṣṇu, Soma and Vāyu, in respective order.

In case, there occurs inversion of duties of the host-performer and the preceptor, then having performed Homa of four items Nyakṣa etc. (grass, fuel-sticks etc.) he should also perform Homa-rite with the recitation of Viṣṇu-sūkta and Vaiṣṇava-sūkta and Puruṣa-sūkta. In case the seeds, which are sown, do not sprout, due to barrenhood, then the priest should perform expiation, prescribed for the lapse of ploughing and sowing of seeds and thereafter, having fed grass to herd of cows, he should perform the whole ritual, once again. In case, untimely soil-examination has been conducted or if there is lapse of ritual, committed by the ploughing-servants or those servants who have

sown the seeds or if some mistake has been committed by them, then the priest should worship God, after offering oblation to fire, in the double quantity of that, prescribed for Homa-rite.

At the time of digging the ground, for construction of the temple, if some thorns or lumps of soil or stone pieces are noticed, then the priest should perform Homa-rites pertaining to Viṣṇu, Brahmā and five deities, presiding over the land.

During the process of soil-examination, if the rite of preparation of the lotus-shaped pit, at the locus of Brahmā, then the Homa with Bhū-sūkta has to be performed. So also the Homa-rites pertaining to Viṣṇu, Brahmā and Varuṇa are to be done. Again, if objects like scull, bones etc., are noticed, then after performing Homa-rites pertaining to the deities; Viṣṇu, Bhūmi and Brahmā should be done. If the water collected in the pit of the shape of Brāhmic lotus is noticed to be rotating leftwards, then the Homa-rites pertaining to Varuṇa, Vāyu and Bhūmi have to be performed. Two Homa-rites pertaining respectively to Varuṇa and Viṣvaksena have to be performed in the contingency of water indicating vibration, shaking or being covered by dust. Two more Homa-rites pertaining to Brāhma-sūkta and Puruṣa-sūkta are also to be performed. If the water is stagnated, then the priest should perform the Homa-rite pertaining to Brahmā, Bhūmi, Varuṇa and Garuḍa, respectively. If the level of the lotus-shape of the pit has become uneven in upper and lower level, then the priest should offer Homa-oblations addressing the deities:

Brahmā, Varuṇa and Bhṛgu. If the lotus which is superimposed gets cracked, then both Prājāpatya as well as Vaiṣṇava types of Homa have to be performed. Similarly if the lotus is displaced towards sub direction, the Homa pertaining to Brahmā as well as Ṛṣis is to be performed. The same Homas i.e. Brāhma and Ārṣa have to be performed, even in the case of burst of the lotus motive. In the event of the crack placed in the pitcher like pit having the shape of Brāhmic Lotus or in the event of leakage in it or in the event of spell of fear among people or else in the event of mob quarrel and blood shade, the priest should perform Homa- rites pertaining to Viṣvaksena, Garuḍa, Viṣṇu, Brahmā and Indra, as well as Homa-rites, with the help of Rātri-sūkta and Prajāpati-sūkta. If no pacification is conducted for ill-omen, then having fed one hundred Brahmins, the host should offer alms to the Vedic priests.

At the time of preparation of gnomon-peg, after striking twice, the priest should perform two Homas; pertaining to Pariṣaṭ i.e., assembly as well as pertaining to all gods. In case the gnomon is cracked or lost or it is distorted, having performed the Homa addressed to presiding deities of (eight) directions, the architect should do demarcation of directions. If the gnomon is cracked he should perform Homa addressed to Viṣṇu and Brahmā. In the event of breakage of the chord, the Homa-rites pertaining to Yama, Vāyu and Viṣṇu have to be performed. If the fixing of the gnomon is omitted, then Pariṣaṭ-Homa is to be performed.

During construction of the temple, if the beginning is made by the main path of action, if subordinate path is resorted to, then after appeasing the Lord and having performed pacificatory Homa and having given alms, the priest may worship the god. In the contingency of demarcation of directions, the priest should perform two Homas: Vaiṣṇava and Saura and then he should conduct demarcation of the directions. If a miniature metallic idol is not available for the miniature temple, then he should request for such an idol either from the home of a Vedic Brahmin or from some other shrine. If it happens to be conforming the stationary image, then having installed it by way of service-idol, he should worship it; in case it is previously worshipped in some other temple, then after the completion of the temporary job, he should again carry it into the previous temple, and having performed pacificatory fumigation, he should worship it, thereover. Conversely, if that image is not suitable, then after the performing Vaiṣṇava Homa, the priest should install the auspicious service-idol alone. In the eventuality of non-availability of mundane metallic image also, the sculptor may make it even with wood. Subsequent to the installation of stationary image, he should install the mundane idol within the first enclosure and then worship the same. In the contingency of non-construction of the miniature temple at all, everything becomes in vain. For that, the priest should offer oblations into fire with the chanting of the Mantras of Rātri-sūkta and Pāramātmika-sūkta. He should donate bulls as well as monetary alms. If the selected location is destined for another god, then

having performed pacificatory Homa only, the priest may install the God of gods in His place. However, if a particular location is designated for the God of gods, then the priest should not select it for any other God.

In case of constructing temple without laying first brick, there would occur great loss to the village to the host as well as to the country. there for, having performed mega-pacificatory rite he should arrange to construct temple after laying first brick.

In case the ritual of Homa, meant for the site is missed, then he should perform Pāñcabhautika, Vaiṣṇava and Vyāhṛti Homas, respectively. Then he should offer oblations into fire ten times after reciting Vāstu Mantras. In case the dimension of the first brick or first stone slab is either less or more than two, Homa-rites by recitation of Vaiṣṇava hymn and Viṣṇu-sūkta have to be performed. At the time of placing the first brick, if gem-depositing is missed, then the priest should perform fire-oblation, in the serial order of chanting Vaiṣṇava hymm, Viṣṇu-sūkta, Puruṣa-sūkta, Mindāhuti, Mahī-sūkta and Vicchinna-mantra. He should also perform Homa by chanting the Mantras pertaining to the presiding deity of Gems. In case, there occurs inversion of placement of the top of the stone-slab and brick, then the priest should offer oblation into fire in the serial order of reciting the hymns, pertaining to all gods, Vaiṣṇava, Viṣṇu-sūkta, Puruṣa-sūkta as well as pair of oblations named Mindāhuti followed by Mahī-sūkta and Vicchinna respectively. In the

eventualities of inversion of the top of the brick, inversion of wood, presence of defect in the tip of the bottom of the stone slab as well as omission of fashioning some component of temple-super structure, inversion of the panel-door and the wall etc., or omission thereof, the priest should perform Homa with the Mantras named Nyakṣa etc. If there is confusion in chanting the Mantra prescribed for depositing the first brick, the priest should perform Homa-rites by recitation of hymns pertaining to all gods, and Viṣṇu as well as Viṣṇu-sūkta and Puruṣa-sūkta and also Mindāhuti, Mahī-sūkta and Vicchinna in due order. In case of unapproved admixture of bricks, the priest should perform Vaiṣṇava Homa. In the event of inversion of the placement of the host and preceptor, the priest may fetch the sacred fire, called Pauṇḍarīka. In case the offering of Dakṣiṇā is missed at the time of placing the brick etc., the priest should perform Āgńeya and Vaiṣṇava Homas and then offer Dakṣiṇā, then he should appease the preceptor. If the whole ritual act of placing the first brick is omitted, then, the priest should offer series of oblations into fire by recitation of Sārva-daivatya and Vaiṣṇava hymns, Viṣṇu-sūkta and Puruṣa-sūkta as well as Mindāhuti, Mahī-sūkta and Vicchinna. In the event of lapse of laying first brick of the enclosure wall, then the priest should perform Homa ten times by reciting the hymn pertaining to the presiding deity of the enclosure wall, retinue deities accompained by Vaiṣṇava hymṇ. If there occurs omission in the placement of the first brick pertaining to the tower-gate, the priest should offer oblation into fire, by reciting

the hymns pertaining to the presiding deities over door-gods and six other deities; Dhātā etc. In respect of erection of pavilion, if omission occurs in placement of the first brick, then the priest should offer oblation by reciting the hymns pertaining to the presiding deities of the pavilion and Viṣṇu. In the event of omission of placing the first brick for construction of the kitchen, the priest should offer fire-oblations, by chanting the Mantras pertaining to the protector of oblation as well as the hymns of Goddess-Śrī and Agni and Viṣṇu. At the time of construction of the altar, meant for spirits, if there is omission of first brick, then having initially performed two Homa-rites by chanting the hymns of Bhūta-devatās and Viṣṇu, he should perform the Homas addressed to Bhūtas, Yakṣas, Piśācas and Nāgas. The four bricks are to be established while reciting the first Mantras of each of the four Vedas. There also, if there occurs omission of placing of the first brick, the priest should offer oblations by reciting Bhūta-Mantras as well as Vaiṣṇava Mantras. Thereafter, having established the altar, by recitation of Mantras, appropriate for the ritual retention, having bathed with water and having performed Homa as before, the priest should chant the four initial Mantras of four Vedas in the four directional zones.

If there occurs the omission of depositing of first brick in the construction of shrines, belonging to retinue-deities, the priest should perform the prescribed Homas and then mutter those respective Mantras. In case the vessel containing gems and meant

to be deposited in the foundation happens to be either less or more in sites, then the priest should perform Homas pertaining Sūrya, Soma and Agni. In the contingency of non-availability of gems prescribed for depositing in foundation, having spread fire in the surrounding, the priest should worship Viṣṇu who is the lord of gems, on the right side. Thereafter, having performed Homa addressed to both Agni and Soma and having taken one immortal stone and having contemplated over it as - Let this be that each respective item- and having pronounced each respective Mantra, the priest should notionally deposit each respective gem. If all the gems are not available, the priest may get finger-rings made with either gold or silver or copper. Further, if all the said metals are not available, then the priest should procure mercury processed with the ritual act after performing Homas with the recitation of Ātma-sūkta, Śrī-sūkta and Viṣṇu-sūkta. If all the food grains are not available, then having brought barley the priest should perform Homa with Ātma-sūkta and other hymns or else he may perform Homas by reciting hymns pertaining to the deities: Vāyu, Viṣṇu and Soma. If the ritual of depositing gems etc., in the foundation, is itself omitted, then the priest should offer oblations to fire by reciting the hymns pertaining to Viṣṇu, Viṣṇu-sūkta and the hymns pertaining to two goddesses: Śrī and Bhū. Thereafter, he should perform the ritual of laying foundation in proper procedure. At the time of worship of god if prescribed meterial happen to be omitted, then having performed Homa addressed to the presiding diety of the material of worship

he should collect alternative representative material after performing Homa by reciting hymn addressed to Śeṣa the Cobra-king. In the case of lapse of placing the top brick, the priest should perform the ritual of expiation, prescribed for the omission of depositing first brick. Then, he should also perform ancillary Homa. In the event of omission of lime-plaster and painting or its confusion, Homa is to be conducted with recitation of Viṣṇu-Gāyatrī. If there is lapse in the dimension of the nail of the pinnacle or its base, if prescribed tree is not available, then the priest should perform Homa rites by recitation of the hymns, pertaining to the deities, such as Viṣṇu, Soma, Agni, Śrī and Bhūmi.

In case, there occurs lapse of placing the top brick: either of the shrines of retinue-deities or of tower-gates or if there occurs distortion of paint and plaster, then Vaiṣṇava Homa is to be performed. In case, the construction of temples is executed hastily, then the priest should perform series of rites such as Vāstu-Homa, Paryagni Karaṇa, sprinkling with five cow-products, recitation of auspicious day etc. So also having performed ablution the priest should perform Homas, such as Agni-daivatya, Pariṣaṭ, Aṅga, Pāramātmika, Īṅkāra, Vaiṣṇava and Mahā Vyāhṛti. Then Having installed those respective deities, in the order prescribed in the ritual of Pratiṣṭhā, the priest should perform the final Homa. In case there arises non- approved admixture of building materials at the time of temple-construction or if there

**९.१.७१ आद्येष्टकादिप्रमाणन्यूनातिरेकादौ प्रायश्चित्तम्**

**वि.६१.३९०**

आद्येष्टका (याः) शिलाया वा प्रमाणे हीने अधिके च वैष्णवं विष्णुसूक्तं च जुहुयात्।

**प्र.२६.३२, ३३**

**९.१.७२ आद्येष्टकाक्रियाहानादौ प्रायश्चित्तम्**

**क्रि.२०.७८ - ८१**

आद्येष्टकाक्रियायान्तु न्यूनायां मन्त्रपर्यये।।

इष्टकाग्रे शिलाग्रे च विपर्यासे तथैव च।
रत्नन्यासविहीने च सर्वदैवत्यपूर्वकम्।।

वैष्णवं विष्णुसूक्तं च पौरुषं सूक्तमेव च।
मिन्दाहुती महीसूक्तं विच्छिन्नं जुहुयात् क्रमात्।।

पूर्वोक्तेन विधानेन कारयेदिति शासनम्।

**स.६६.४६ - ४८**

**९.१.७३ आद्येष्टकान्यासे रत्नन्यासलोपे प्रायश्चित्तम्**

**प्र.२६.३४, ३५**

रत्नन्यासविहीने तु हुनेत् तदधिपान् मनून्।।

विष्णुसूक्तं ततो हुत्वा रत्नन्यासं समाचरेत्।

**वि.६१.३९०**

[1]तस्मिन् रत्नन्यासे विहीने विष्णुसूक्तं जुहुयात्।

**य.४४.२०**

समादाय तथा न्यस्य मध्ये रत्नानि संन्यसेत्।
तद्रत्नहीने हेम्नश्च हीने न्यस्य हुनेत् तथा।।

### ९.१.७४ आद्येष्टकान्यासे शिलेष्टकाग्रविपर्यासे प्रायश्चित्तम्

**क्रि.२०.७९ - ८१**

इष्टकाग्रे शिलाग्रे च विपर्यासे तथैव च।
------------------ सर्वदैवत्यपूर्वकम्।।

वैष्णवं विष्णुसूक्तं च पौरुषं सूक्तमेव च।
मिन्दाहुती महीसूक्तं विच्छिन्नं जुहुयात् क्रमात्।।

पूर्वोक्तेन विधानेन कारयेदिति शासनम्।

**स.६६.४६ - ४८**

**वि.६१.३९०**

तासामग्रविपर्यासे अधोमुखे च दिग्दैवत्यं वैष्णवं च हुत्वा, [2]देवानामादिमन्त्रान् जपेत्।

**प्र.२६.३२, ३३**

**नि.३१**

इष्टकाग्रविपर्यासे ------------------।।

---

1. शिलेष्टकान्यासे
2. वेदानाम् (?)

महाशान्तिं ततो हुत्वा यथोक्तन्यासमाचरेत्।

**ज्ञा.९७.१८७**

इष्टकाग्रविपर्यासे ----------------पौण्डरीकाग्निं समाहरेत्।

**९.१.७५ आद्येष्टकान्यासे इष्टकाग्रविपर्यासादौ प्रायश्चित्तम्**

**खि.३४.२३ - २५**

इष्टकाग्रविपर्यासे तथा दारुविपर्यये।

शिलामूलाग्रदोषे वा प्रस्तरे वापि सङ्कटे।।

हीनाङ्गे च विमाने तु प्रतिखण्डविपर्यये।

कवाटद्वारकुड्यादौ हीने चापि विपर्यये।।

न्यक्षादिदेवतामन्त्रैः जुहुयान्निष्कृतिर्भवेत्।

**९.१.७६ आद्येष्टकान्यासे मन्त्रविपर्यये प्रायश्चित्तम्**

**क्रि.२०.७८ - ८१**

------------------------- मन्त्रपर्यये।।

-------------------------------------- ।

-------------------सर्वदैवत्यपूर्वकम्।।

वैष्णवं विष्णुसूक्तं च पौरुषं सूक्तमेव च।

मिन्दाहुती महीसूक्तं विच्छिन्नं जुहुयात् क्रमात्।।

पूर्वोक्तेन विधानेन कारयेदिति शासनम्।

**स.६६.४५**

**९.१.७७ इष्टकासङ्करे प्रायश्चित्तम्**

**खि.३४.२७**

इष्टकासङ्करे मिश्रे वैष्णवं जुहुयात् क्रमात्।।

**९.१.७८ आद्येष्टकान्यासे यजमानाचार्यकर्मविपर्यासे प्रायश्चित्तम्**

**ज्ञा.९७.१८७**

यजमानाचार्यविपर्यासे पौण्डरीकाग्निं समाहरेत्।

**९.१.७९ इष्टकान्यासादौ दक्षिणालोपे प्रायश्चित्तम्**

**खि.३४.२८**

शास्त्रोक्तदक्षिणाहीने हुत्वाऽऽग्नेयं च वैष्णवम्।
शक्तितो दक्षिणां दद्यादाचार्यमनुमानयेत्।।

**९.१.८० आद्येष्टकाक्रियालोपे प्रायश्चित्तम्**

**क्रि.२०.७८ - ८१**

आद्येष्टकाक्रियायां तु न्यूनायां ---------------।।
------------------------------------------- ।
-------------------------- सर्वदैवत्यपूर्वकम्।।

वैष्णवं विष्णुसूक्तं च पौरुषं सूक्तमेव च।
मिन्दाहुती महीसूक्तं विच्छिन्नं जुहुयात् क्रमात्।।

पूर्वोक्तेन विधानेन कारयेदिति शासनम्।

**स.६६.४५ - ४८**

**क्रि.२०.७६ - ७८**

आद्येष्टकामकृत्वा तु विमानं क्रियते यदि।।

ग्रामस्य यजमानस्य राष्ट्रस्य महती विपत्।

तस्मात् तदपहाराय महाशान्तिं तथा यजेत्।।

आद्येष्टकां च सन्न्यस्य विमानं कारयेत् पुनः।

**य.४४.१९**

आद्येष्टकाक्रियाहीने अधिके च विपर्यये।

अधोमुखे च संभ्रान्ते महाशान्तिं हुनेत् क्रमात्।।

## ९.१.८१ प्राकारे आद्येष्टकान्यासलोपे प्रायश्चित्तम्

**क्रि.२०.८६, ८७**

प्राकाराद्येष्टकाहीने परिवाराधिदैवतम्।।

वैष्णवेन समायुक्तं दशकृत्वो जुहोति च।

## ९.१.८२ गोपुरे आद्येष्टकान्यासलोपे प्रायश्चित्तम्

**क्रि.२०.८७, ८८**

गोपुराद्येष्टकाहीने द्वारपालाधिदैवतम्।।

धात्रादीनां तु षणमन्त्रान् दशवारं सवैष्णवम्[1]।

1. जुहोतीत्यनुवर्तते।

### ९.१.८३ मण्डपादौ आद्येष्टकान्यासलोपे प्रायश्चित्तम्

**क्रि.२०.८८, ८९**

आद्येष्टकानां विन्यासे हीने चेन्मण्डपादिषु।।

तन्मण्डपाधिदैवत्यं वैष्णवेन शतं यजेत्।

### ९.१.८४ महानसे आद्येष्टकान्यासलोपे प्रायश्चित्तम्

**क्रि.२०.८९, ९०**

महानसस्य हीने चेत् [1]हविरक्षकदेवतम्।।

श्रीदैवत्यं च तत्सूक्तम् आग्नेयं वैष्णवं यजेत्।

### ९.१.८५ भूतपीठे आद्येष्टकान्यासलोपे प्रायश्चित्तम्

**क्रि.२०.९० - ९६**

आद्येष्टकाक्रमं वक्ष्ये भूतपीठप्रकल्पने।।

इष्टकां वा शिलां वाथ गृहीत्वा पूर्वसङ्ख्यया।
अधिवासादिकर्माणि कृत्वा पूर्वोक्तमार्गतः।।

मन्त्रौ तद्भूतदैवत्यौ वैष्णवेन समन्वितौ।
अष्टोत्तरशतं हुत्वा भूतेभ्यश्च ततः परम्।।

यक्षेभ्यश्च पिशाचेभ्यो नागेभ्यश्च जुहोति च।
चतुर्वेदादिमन्त्रैस्तु स्थापयेच्चतुरिष्टकाः।।

---

1. हवी (?)

तत्राप्याद्येष्टकाहीने कृते सति तपोधनाः।
जुहुयाद् भूतमन्त्राभ्यां वैष्णवेन युतं शतम्।।

अधिवासोचितैर्मन्त्रैः पीठं संस्नाप्य वारिणा।
संस्नाप्य सप्तकलशैः होमं हुत्वा च पूर्ववत्।।

चतुर्वेदादिमन्त्रांस्तान् चतुर्दिक्षु तथा जपेत्।
कर्मणामपि सर्वेषां प्रच्युतावुक्तनिष्कृतिः।।

**९.१.८६ परिवारालये आद्येष्टकान्यासलोपे प्रायश्चित्तम्**

**क्रि.२०.९७, ९८**

हुत्वा तदुक्तहोमान्ते तत्तन्मन्त्रान् जपेत् क्रमात्।
परिवारालयानां च हरेरुक्तप्रमाणतः।।

आद्येष्टकादिकं सर्वं कुर्यात् तन्मन्त्रपूर्वकम्।

**९.१.८७ गर्भन्यासे गर्भभाजनप्रमाणन्यूनतातिरेके प्रायश्चित्तम्**

**वि.६१.३९०**

गर्भभाजने प्रमाणहीने अधिके च, सौरं, सौम्यम्, आग्नेयं च यजेत्।

**प्र.२६.३६, ३७**

**९.१.८८ गर्भन्यासे रत्नालाभे प्रायश्चित्तम्**

**स.६६.८७ - ९०**

रत्नानामप्यलाभे तु परिषिच्य च पावकम्।।

अग्नेर्दक्षिणतः पार्श्वे रत्नेशं विष्णुमर्चयेत्।

अग्नीषोमीयं हुत्वैव गृहीत्वैवामृताश्मकम्।।

तत्तद् द्रव्यमिति ध्यात्वा तत्तन्मन्त्रमुदीरयन्।
पूर्वोक्तेन विधानेन रत्नन्यासं करोति वै।।

रत्नेषु तेषु सर्वत्र हीने चैकाङ्गुलीयकान्।
हेम्ना वा रजतेनाथ ताम्रेणैवापि कारयेत्।।

**नि.३१**

रत्नानामप्यलाभे तु चाग्निं संसाध्य पूर्ववत्।।

अग्नेर्दक्षिणतः पश्चात् रत्नाधिपमथार्चयेत्।
अङ्गहोमं ततो हुत्वा वैष्णवं च सुहूयताम्।।

सुवर्णं तत्र सङ्गृह्य तत्तद् द्रव्यमिति ब्रुवन्।

**वि.६४.३९८**

गर्भन्यासार्थं पीठन्यासार्थं च रत्नानामलाभे सुवर्णं निक्षिप्य, विष्णुसूक्तं ---
----------- प्रायश्चित्तं जुहुयात्।

**प्र.२६.१३०, १३१**

**ज्ञा.९८.१८८**

उक्तरत्नालाभे अग्निं परिस्तीर्य अग्नेर्दक्षिणतो रत्नत्रयम् अभ्यर्च्य तेभ्यो हुत्वा सङ्गृह्य तत्तद्रत्नमिति मनसा ध्यात्वा तत्तन्मन्त्रेण स्थापयेत्।

## ९.१.८९ गर्भन्यासादौ सर्वधात्वलाभे प्रायश्चित्तम्

**स.६६.९३, ९४**

अलाभे सर्वधातूनां पारदं च समाहरेत्।।

आत्मसूक्तं च हुत्वा तु श्रीसूक्तं च सुहूयते।
विष्णुसूक्तं च हुत्वा तु पश्चात् कर्म समाचरेत्।।

**वि.६४.३९८**

गर्भन्यासार्थं पीठन्यासार्थं च ------------- धातूनामलाभे पारदं, ब्राह्मं रौद्रं च ------------- प्रायश्चित्तं जुहुयात्।

**प्र.२६.१३२**

**ज्ञा.९८.१८८**

धातोरपि पारदमादायैवं [1]समाचरेत्।

**नि.३१**

---------------- धात्वलाभे तु पारदम्[2] ।।

तस्याधिपं समभ्यर्च्य तत्तन्मन्त्रं सुहूयताम्।

## ९.१.९० गर्भन्यासादौ सर्वबीजालाभे प्रायश्चित्तम्

**स.६६.९३, ९४**

अलाभे सर्वबीजानां यवं प्रतिनिधिं हरेत्।
--------------------------------------।।

आत्मसूक्तं च हुत्वा तु श्रीसूक्तं च सुहूयते।
विष्णुसूक्तं च हुत्वा तु पश्चात् कर्म समाचरेत्।।

1. रत्नालाभोक्तप्रकारेण।
2. गृह्णीयादित्यध्याह्रियते।

**वि.६४.३९८**

गर्भन्यासार्थं पीठन्यासार्थं च बीजानामलाभे यवं, मुद्गं, (निक्षिप्य) वायव्यं वैष्णवं च प्रायश्चित्तं जुहुयात्।

**प्र.२६.१३३**

**ज्ञा.९८.१८८**

बीजानां यवं सोममभ्यर्च्य हुत्वा न्यसेत्।

**नि.३१**

बीजालाभे यवं चैव[1] ----------------।।

तस्याधिपं समभ्यर्च्य तत्तन्मन्त्रं सुहूयताम्।

## ९.१.९१ गर्भन्यासलोपे प्रायश्चित्तम्

**वि.६१.३९०**

गर्भन्यासे विहीने वैष्णवं विष्णुसूक्तं श्रीभूमिदैवत्यं च हुत्वा, विधिना गर्भन्यासं कारयेत्।

**प्र.२६.३५, ३६**

**ज्ञा.९७.१८७**

गर्भन्यासहीने ---------------- पौण्डरीकाग्निं समाहरेत्।

**य.४४.२१ - २५**

गर्भन्यासविहीने च स्थानानां च विपर्यये।
शान्तिं हुत्वा समादाय स्थापयेद्विधिचोदितम्।।

---

1. गृह्णीयादित्यध्याह्रियते।

तद्गर्भस्य मुखं(विद्धि)पट्टी तस्माद्विप्राय वै बुधः।
गर्भं सम्यङ्न्यसेदूर्ध्वपट्टिकायां विशेषतः।।

तस्मादधश्च जात्युक्तं गर्भं संस्थापयेद् द्वयोः।
विपरीतेऽप्यनर्थः स्यात् कर्ता भर्ता विनश्यति।।

मुखबाहूरुपादेषु क्रमाज्जाता द्विजादयः।
श्रुतिरित्यस्ति तस्मात् तं गर्भं गर्भे सुसंन्यसेत्।।

विपरीतं न्यसेच्चेत् तं शीघ्रमादाय मन्त्रवित्।
महाशान्तिं च सप्ताहं हुत्वाऽन्ते संन्यसेत् क्रमात्।।

**नि.३१**

**क्रि.२०.९८ - १००**

गर्भन्यासक्रियाहीने कालातीते विपर्यये।
वैष्णवं भूमिदैवत्यं श्रीदैवत्यं तथैव च।।

विष्णुसूक्तं च जुहुयात् पौरुषं सूक्तमेव च।
मिन्दाहुती च विच्छिन्नं महीसूक्तं क्रमाद्यजेत्।।

पूर्ववत् संन्यसेद् गर्भं तत्तत्परिषदां स्मृतम्।

**स.६६.५५ - ५७**

### ९.१.९२ देवकार्यविहितद्रव्यलोपे प्रायश्चित्तम्

**खि.३४.३९**

उक्तद्रव्यविहीने तु द्रव्यदैवत्यमेव च।
शैषिकं चैव हुत्वा तु द्रव्यपतिनिधिं हरेत्।।

### ९.१.९३ विमाननिर्माणे मूर्धेष्टकान्यासलोपादौ प्रायश्चित्तम्

**क्रि.२०.१०१, १०२**

मूर्धेष्टकायां हीनायां कालेऽतीते विपर्यये।
आद्येष्टकायां सम्प्रोक्तं प्रायश्चित्तं जुहोति च।।

अङ्गहोमं ततो हुत्वा पूर्वोक्तविधिना चरेत्।

**स.६६.५८, ५९**

**नि.३१**

मूर्धेष्टकायां हीनायां सुधावर्णादिहीनके।
विपर्यासे च गायत्रीं वैष्णवं चैव हूयताम्।।

सहस्राहुतिकं हुत्वा तत्तत्कर्म समाचरेत्।

### ९.१.९४ विमाननिर्माणे स्थूपिकीलादीनां प्रमाणविरहादौ प्रायश्चित्तम्

**वि.६१.३९०**

स्थूपिकीले नभातरि[1] च प्रमाणहीने उक्तवृक्षालाभे च, वैष्णवं, सौम्यम्, आग्नेयं, श्रीभूमिदैवत्यं च हुत्वा विधिना कारयेत्।

**प्र.२६.४१, ४२**

**य.४४.२७, २८**

शान्तिं हुत्वा तथा धीमान् स्थूपिकीलविपर्यये।
यथोक्तवृक्षालाभे तु याज्ञिकैर्वा समारभेत्।।

वैष्णवं शान्तिमन्त्रं च श्रीभूसूक्तसमन्वितम्।

हुत्वा तत्र यथामार्गं स्थापयेद्विधिचोदितम्।।

---

1. तदाधारे - पाठान्तरम्। (वै.मु.सं.पृ.३७३)

### ९.१.९५ परिवारालयादिनिर्माणे मूर्धेष्टकालोपादौ प्रायश्चित्तम्
**क्रि.२०.१०४ - १०६**

परिवारालयानां च गोपुराणां तथैव च।।

मूर्धेष्टकायां हीनायां वर्णलेपविपर्यये।
सहस्राहुतिमब्जाग्नौ वैष्णवं जुहुयात् तथा।।

सुधाकर्म पुनः कुर्याद्वर्णलेपं तथैव च।

### ९.१.९६ आलयादेः त्वरया निर्माणे प्रायश्चित्तम्
**क्रि.२०.१३९ - १४८**

आलये मण्डपे वापि परिवारालये तथा।
प्राकारे गोपुरे पीठे पचनालय एव वा।।

इष्टकानां तु प्रक्षेपे तथा वर्णानुलेपने।
एकद्विमासे कुर्याच्चेत् नवकर्मादिकं तथा।।

तद्दोषं तु व्यपोह्यैव सर्वेषां तु सलक्षणम्।
यथासौन्दर्यमार्गेण नवकर्म समाचरेत्।।

समाप्तेऽह्नि च पूर्वाह्णेऽप्यालयस्योत्तरे तथा।
वास्तुहोमं ततो हुत्वा पर्यग्निकरणं तथा।।

पञ्चगव्यैः समभ्युक्ष्य पुण्याहमपि वाचयेत्।
स्नपनोक्तक्रमेणैव विधिना स्नापयेद् बुधः।।

आलयाद्दक्षिणे चैव औपासनविधानतः।
कुण्डं सलक्षणं कृत्वा प्रज्वाल्याग्निं समन्त्रकम्।।

तद्दैवत्यं च हुत्वा तु परिषन्मन्त्रसंयुतम्।
अङ्गहोमं ततो हुत्वा पारमात्मिकसंयुतम्।।

ईकारादींस्ततो हुत्वा अष्टाशीत्याहुतिं यजेत्।
वैष्णवं तत्र जुहुयात् महाव्याहृतिसंयुतम्।।

सहस्राहुतिं च जुहुयात् सर्वेषामेव कारयेत्।
तांस्तान् देवान् प्रतिष्ठाप्य प्रतिष्ठोक्तक्रमेण वै।।

अन्तहोमं ततो हुत्वा देवेशं सम्प्रणम्य च।
महाहविः प्रभूतं वा देवेशाय निवेदयेत्।।

**९.१.९७ विमाननिर्माणे द्रव्यसङ्करादौ प्रायश्चित्तम्**

**वि.६१.३९०**

द्रव्याणां सङ्करे स्थानविपर्यासे च वैष्णवं, तत्तत्स्थानाधिदैवत्यं च जुहुयात्।

**प्र.२६.३७, ३८**

**९.१.९८ विमाननिर्माणे अनुक्तदेशे द्रव्यन्यासे प्रायश्चित्तम्**

**वि.६१.३९०**

अनुक्ते देशे न्यस्तं चेत्, वैष्णवं विष्णुसूक्तं पुरुषसूक्तं श्रीभूमिदैवत्यं च हुत्वा, तत्तत्स्थाने निवेशयेत्।

**प्र.२६.३९**

अनुक्तदेशे न्यासे च विष्णुसूक्तं च पौरुषम्।
हुनेच्छ्रीभूमिदैवत्यं तत्तत्स्थाने निवेशयेत्।।

**९.१.९९ मूर्धशिलेष्टकाप्रमाणन्यूनतातिरेके प्रायश्चित्तम्**

**वि.६१.३९०**

मूर्धेष्टकाशिलाप्रमाणे हीने अधिके च आद्येष्टकावत् प्रायश्चित्तं समाचरेत्।

**प्र.२६.४०**

**य.४४.२६**

मूर्धेष्टकाशिलाया वा लक्षणेऽन्यविपर्यये।
आद्येष्टकावद्धुत्वाग्नौ क्रमेणैव सुसंन्यसेत्।।

**९.१.१०० विमाननिर्माणे स्थूपिशू(की?)लादिलोपे प्रायश्चित्तम्**

**क्रि.२०.१०२ - १०४**

स्थूपिशूलादिहीने[1] तु ध्रुवसूक्तं समुच्चरन्।।

संन्यसेदिष्टकामेकां तत्र रत्नानि संन्यसेत्।
दिक्ष्विष्टकाश्चतस्रस्तु स्थापयित्वा तु पूर्ववत्।।
मध्ये स्थूपिं प्रतिष्ठाप्य सुधया कारयेद्दृढम्।

**९.१.१०१ विमाननिर्माणे कलशादिक्रियालोपे प्रायश्चित्तम्**

**य.४४.२९**

समापिते विमाने तु कलशादिक्रिया यदि।
नो चेच्छान्तिं च हुत्वान्ते नान्यथा कारयेत् तथा।।

1. कीलाधि (?)

## ९.१.१०२ विमाननिर्माणे हेमस्थापनलोपे प्रायश्चित्तम्

**य.४४.३३**

विमाने समाप्ते नो हेमनः[1] स्थापनं यदि ।
शान्तिं हुत्वा यथामार्गं स्थापयेद्विधिचोदितम्।।

## ९.१.१०३ कूटागारविहितलक्षणलोपप्रायश्चित्तम्

**य.४८.११ - १३**

कूटागारप्रतिष्ठायां सर्वं जङ्गममाचरेत्।
इष्टकागर्भमूले च आद्येष्टकयैव शास्त्रवित्।।
मूर्धेष्टकार्हं यत्रापि तत्रार्हं प्रथमेष्टका।
ध्रुवबेरं च यत्रार्हं भूमै गर्भं च सन्न्यसेत्।।
अन्यथा चेद्विनाशः स्यात् कर्तुर्भर्तुश्च तत्र च।
यदि चेत् तां व्यपोह्यैव महाशान्तिं च कारयेत्।।

## ९.१.१०४ विमाननिर्माणे कलभक्रियादिलोपे प्रायश्चित्तम्

**वि.६१.३९०, ३९१**

विमाने समाप्ते मासादूर्ध्वं कलभक्रियासुधावर्णानुलेपनेषु हीनेषु वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं , श्रीभूमिदैवत्यं च हुत्वाऽऽरभेत। आग्नेयं भूमिदेवत्यं च हुत्वा विधिना कारयेत्।

---

1. हेम्नः इतिस्थाने छन्दोभङ्गावारणाय विश्लष्य प्रयोगः कृतःस्यात्।

### ९.१.१०५ विमाननिर्माणे सुधालेपलोपे प्रायश्चित्तम्

**प्र.२६.४२ - ४४**

विमाने निर्मिते पश्चात् सुधाकर्मण्यकल्पिते।।

वैष्णवं विष्णुसूक्तं च सूक्तं पौरुषमेव च।
हुनेच्छ्रीभूमिदैवत्यं विधिना पुनरारभेत्।।

आग्नेयं भूमिदैवत्यं हुत्वा कार्य समाचरेत्।

**स.६६.५९, ६०**

सुधायाश्च क्रियाहीने वर्णलेपविपर्यये।।

सहस्राहुतिमब्जाग्नौ जुहुयाद्वैष्णवं पुनः।

### ९.१.१०६ द्वादशाब्दोपरि आलयासमाप्तौ प्रायश्चित्तम्

**खि.३४.२५ - २७**

द्वादशाब्दोपरि तथा समाप्तिर्न भवेद्यदि।।

आरब्धस्य तु कार्यस्य येन केनापि हेतुना।
ग्रहयज्ञं विशेषेण कुर्याद् ब्राह्मणभोजनम्।।

कृत्वेमां निष्कृतिं पूर्व कार्यारम्भं पुनश्चरेत्।

### ९.१.१०७ अनुक्तविमानदोषप्रायश्चित्तम्

**प्र.२६.५१ - ५५**

प्रथमेष्टकां समारभ्य स्थूपिकीलावसानके।।

अनुक्तानां च दोषाणामियं स्यात् सर्वनिष्कृतिः।
आलयात् पुरतो वाथ दक्षिणे वा मनोरमे।।

शुचौ देशे प्रतिष्ठाप्य पद्माग्नौ जुहुयात् क्रमात्।
वैष्णवं विष्णुसूक्तं च पौरुषं सूक्तमेव च।।

हुनेच्छ्रीभूमिदैवत्यम् अङ्गहोमश्च हूयते।
स्थूप्याद्युपानपर्यन्तं विमानाङ्गानि नामतः।।

'दद्भ्यः स्वाहा'दि जुहुयाद् ब्राह्मं रौद्रं विनायकम्।
आग्नेयं दुर्गासूक्तं च प्राजापत्यं च हावयेत्।

**वि.६१.३९१**

**क्रि.२०.९६, ९७**

कर्मणामपि सर्वेषां प्रच्युतावुक्तनिष्कृतिः।।

हुत्वा तदुक्तहोमान्ते तत्तन्मन्त्रान् जपेत् क्रमात्।

## ९.१.१०८ विमानादौ न्यूनतायां प्रायश्चित्तम्

**स.६६.४८ - ५५**

विमाने प्रस्तरे तस्मिन्नलङ्कारे च सर्वशः।।

हीने चाङ्गे विमाने तु प्रतिबन्धविपर्यये।
द्वारस्याभ्यन्तरस्यापि भित्तौ हीनाधिके तथा।।

न्यक्षादीनां चतुर्णां च चतुर्होमं विधीयते।
चतुर्मध्ये पौण्डरीकमब्जहोमं समाचरेत्।।

रात्रिसूक्तं च जुहुयात् पौरुषं सूक्तमेव च।
सहस्राहुतिपर्यन्तं यथोक्तं कारयेद् बुधः।।

स्वस्ति चैवेह स्वाहेति प्रजापतय इत्यपि।

अग्निर्धीमतये स्वाहा आदित्येभ्य इति ब्रुवन्।।

विश्वेभ्यो देवेभ्यश्चेति मरुद्गणेभ्य इत्यपि।
भूरग्नये चेत्युक्त्वा तु भुवो वायव इत्यपि।।

सुवरादित्याय इत्युक्त्वा भूर्भुवः सुवरित्यपि।
एतैर्मन्त्रैश्च दशभिः शतशो जुहुयात् क्रमात्।।

सहस्राहुतिमित्येवं वदन्ति मुनिसत्तमाः।

**क्रि.२०.८१ - ८६**

विमाने प्रस्तरे तस्मिन्नलङ्कारे च सर्वशः।।

हीने चाङ्गे विमाने च प्रतिखण्डविपर्यये।
शान्तिकादिविमाने तु तले त्वन्योन्यसङ्करे।।

द्वारस्याभ्यन्तरस्यापि भित्तेर्हीनेऽधिके तथा।
न्यक्षादीनां चतुर्णां च शतकृत्वो यजेत् क्रमात्।।

मध्ये तु पौण्डरीकाग्नौ पद्महोमं जुहोति च।
जुहुयाद्रात्रिसूक्तं च पौरुषं सूक्तमेव च।।

सहस्राहुतिपर्यन्तं यथोक्तं कारयेद् बुधः।
अन्योन्यं गण्यसाङ्कर्यं नाचरेच्छान्तिकादिषु।।

अद्भुते शान्तिकं गण्यं योजयेत् सार्वदेशिकम्।

**ज्ञा.९७.१८७**

प्रस्तरे सङ्कुले हीनाङ्गे प्रमाणे हीने दोषयुक्ते विहीने द्वारगृहभित्त्यादीनां हीनाधिक्ये अङ्गहीने विमाने ---------- पौण्डरीकाग्निं समाहरेत्।

**स.६६.६२ - ६७**

नवीकरणं तु यः कुर्याद्यथायोग्येन वस्तुना।।

भित्तिहीने तथा हीने कपोते कूटशालके।
शिखरे स्थूपिकायां तु महादोषो भविष्यति।।

जुहुयात् तस्य शान्त्यर्थं विष्णुसूक्तं तथैव च।
विमानस्याङ्गहोमं च हुत्वा पौरुषमेव च।।

सहस्राहुतिकं हुत्वा गुरवे दक्षिणां ददेत्।
वल्लीकर्म ततः कुर्याच्छिल्पिभिः कर्मवित्तमैः।।

वृक्षवल्लीतृणादौ तु प्ररूढे तु विमानके।
हुत्वा वृक्षाधिदैवत्यं गुरवे दक्षिणां ददेत्।।
उद्धृत्य शिल्पिना पश्चान्नवीकरणमाचरेत्।

## ९.१.१०९ विमानभेदनादौ प्रायश्चित्तम्

**नि.३१**

उपानान्मूर्धपर्यन्तं भिन्ने जीर्णे तथैव च।।

तरुणालये प्रतिष्ठाप्य नवीकरणमाचरेत्।
देवदेवं प्रतिष्ठाप्य विमानस्थापनं चरेत्।।

## ९.१.११० प्राकारगोपुरादिवैकल्यशान्तिः

**वि.६१.३९१**

प्राकारगोपुरादिषु हीनेषु महत्तरदोषो भवेत्। वंशहानिः शत्रुवृद्धिश्च भवेत्। विष्वक्सेने हीने कुलोत्सादनं, भूतपीठे हीने धनधान्यायुष्यहानिः, कूपाराम-

महानसपुष्पसञ्चयस्नानोदकपानीयस्थानस्नपनालयास्थानमण्डपादिषु हीनेषु तत्सर्वं निष्फलं भवति। तस्मात् सर्वप्रयत्नेन कारयेत्। वैष्णवं विष्णुसूक्तं पुरुषसूक्तं श्रीभूमिदैवत्यं तत्तदधिदैवत्यं जुहुयात्।

**प्र.२६.४५ - ५१**

प्राकारे गोपुरे हीने दोषो भूयान्महत्तरः।।

वंशहानिर्द्विषद्वृद्धिरर्थनाशो महद्भयम्।
शान्ते हीने महापत् स्यात् कुलं चोत्सीदति ध्रुवम्।।

भूतपीठविहीने तु धनधान्यायुषां क्षयः।
कूपाराममहविश्शालापुष्पसञ्चयवाटिकाः।।

स्नानपानीयशाला च तथैवास्थानमण्डपम्।
नृत्तगीतप्रपाश्चैवं मण्डपादावनिर्मिते।।

सम्पद्येत महान् दोषः कृतं स्यादकृतं पुनः।
तस्मात् सर्वप्रयत्नेन कारयेच्छक्तितो बुधः।।

वैष्णवं विष्णुसूक्तं च पौरुषं सूक्तमेव च ।
हुत्वा श्रीभूमिदैवत्यं तत्तद्दैवत्यमेव च।।

यथोक्तं तु प्रकुर्वीत वित्तशाठ्यं न कारयेत्।

### ९.१.१११ द्वारस्तम्भादिप्रमाणहीनादौ प्रायश्चित्तम्

**वि.६४.३९७**

द्वारस्तम्भभुवङ्गपतङ्गकवाटबोधिकोत्तरतुलास्तम्भादिषु प्रमाणहीनेषु, दाव दुष्टेषु, अग्निदग्धेषु, जीर्णेषु, कृमिदष्टेषु च तानि त्यक्त्वा, अन्यान्याहृत्य, पूर्ववत् संयोज्य, अभ्युक्ष्य, नित्याग्नौ वैष्णवं सौम्यमाग्नेयं च जुहुयात्।

**प्र.२६.१२८ - १३०**

**क्रि.२०.१३० - १३२**

कवाटबोधिकास्थूणासूत्तरे दोषसंयुते।
वृद्धौ प्रमाणहीने च जीर्णे दग्धे च तं त्यजेत्।।

अन्यत् प्रमाणसंयुक्तं गृहीत्वा योजयेत् पुनः।
'आपो हिष्ठा'दिभिः प्रोक्ष्य जुहुयाद्वैष्णवं शतम्।।

भुवङ्गे च पतङ्गे च कवाटे स्तम्भयोर्द्वयोः।
धात्रादीन् षट् समावाह्य विधिनैव समर्चयेत्।।

**स.६६.८३ - ८५**

**ज्ञा.९७.१८७**

भुवङ्गपतङ्गकवाटबोधिकोत्तरस्थूणादीनामालये दोषयुक्ते जीर्णे शीर्णे वा तत्तदपहायान्यं संयोज्य प्रोक्षणैः प्रोक्ष्य तत्तद्दैवत्यं हुत्वा भोजयेत्।

## ९.१.११२ कवाटविरहे प्रायश्चित्तम्

**वि.६१.३९१**

आलयस्य कवाटे हीने धात्रादिषड् दैवत्यं वैष्णवं श्रीभूमिदैवत्यं च जुहुयात्।

**प्र.२६.४४, ४५**

हीने धाम्नः कवाटादौ धात्रादीन् जुहुयाच्च षट्।।

वैष्णवं श्रीमहीमन्त्रान् हुत्वा निर्मापयेत् पुनः।

## ९.१.११३ आचार्यविपर्यासे प्रायश्चित्तम्

**खि.३४.३१ - ३६**

आचार्यस्य विपर्यासे मुनिहोमं समाचरेत्।।

आचार्यः कर्षणारम्भे यो वृतः शास्त्रवर्त्मना।
तेन सर्वास्तु निर्वाह्याः प्रतिष्ठान्ताः क्रियाः सदा।।

ततः परं च नित्यानि तथा नैमित्तिकानि च।
कर्माणि तेनैवान्यानि निर्वर्त्यानि विभूतये।।

आचार्यं वरयेन्नान्यमुत्सवादिषु कर्मसु।
तदभावे तु तत्पुत्रं पौत्रं नप्तारमेव वा।।

शिष्यं वाथ प्रशिष्यं वा तत्स्थाने वरयेद् गुरुम्।
आचार्यसङ्करे कर्तुः आलयस्य विशेषतः।।

नश्यन्ति सम्पदः पूजा संवृत्ता निष्फला भवेत्।

**स.६७.१६**

आचार्यस्य विपर्यासे मुनीनां होममाचरेत्।

**स.६९.४ - ११**

आचार्यं कर्षणाकाले यथोक्तं वरयेद् बुधः।।

कर्षणादि प्रतिष्ठान्तं कर्म तेनैव कारयेत्।
ऊर्ध्वेऽपि तत्र कर्तव्यं सर्वं तेनैव कारयेत्।।

स्थाने तु देवदेवस्य वृतश्शिष्येण यः पुरा।
स्थानार्चनमिति प्राहुर्विष्णवर्चाशास्त्रपारगम्।।

वैखानसेन सूत्रेण निषेकादिक्रियान्वितम्।
पूर्वोक्तलक्षणैर्युक्तं ब्राह्मणं मुनिपुङ्गवाः।।

तस्याभावे तु युक्तांस्तु पुत्रानेव यथाक्रमम्।
तदभावे तु शिष्येण तच्छिष्येणापि कारयेत्।।

तत्पुत्रादावयुक्ते तु तदनुज्ञातपूर्वकम्।

तदन्यं युक्तमाचार्यं वरयेत् पूर्ववत् सुधीः।।

अन्यथा यजमानस्य ग्रामस्य च विपद् भवेत्।
पौण्डरीकाग्निमादाय परिषिच्य च पावकम्।।

हुत्वैव तु महाशान्तिं यथोक्तं कारयेद् बुधः।

**प्र.२७.१, २**
आचार्यस्यर्त्विजां चैव पूजकस्य विशेषतः।
यथोक्तवरणे हीने शान्तिं कुर्याद्यथाविधि।।

अब्जाग्नौ तु महाशान्तिं दशवारं हुनेत्ततः।
यथोक्तं वरणं कृत्वा पश्चात् कर्म समाचरेत्।।

### ९.१.११४ आचार्यर्त्विग्भर्त्सनादौ प्रायश्चित्तम्

**स.६७.१६, १७**
आचार्यऋत्विजां तत्र भर्त्सने शपने तथा।।

हनने च तथा रौद्रं वैष्णवं च यजेद् बुधः।
तानुपास्यानुमान्यैव पश्चात् कर्म समाचरेत्।।

**खि.३४.३६, ३७**
आचार्यस्यर्त्विजां चैव तथा वै कर्मकारिणाम्।।

भर्त्सनादौ महान् दोषः प्रमादात् सम्भवे भवेत्।
जुहुयाद्वैष्णवं सौम्यं तान् कुर्याच्च समाहितान्।।

### ९.१.११५ गुरुयजमानकलहे प्रायश्चित्तम्

**स.६७.१८, १९**
गुरोश्च यजमानस्य कलहः सम्भवेद्यदि।
वैष्णवं ब्रह्मदैवत्यं भौतिकं जुहुयात् ततः।।

सुवर्णपशुभूम्यादीन् दत्त्वा तमनुमान्य च।
प्रसन्ने तु गुरौ तस्मिन् पश्चाच्छेषं समाचरेत्।।

**खि.३४.३८**

कलहो यदि सञ्जात आचार्ययजमानयोः।
वैष्णवं च तथा ब्राह्मं जुहुयात् पाञ्चभौतिकम्।।

## ९.१.११६ आचार्यादीनां मिथः कलहादौ प्रायश्चित्तम्

**य.४९.१ - ११**

आचार्यस्यार्चकस्यापि परिचारगणस्य च।
परस्परविरोधे तु प्रायश्चित्तं वदाम्यहम्।।

आचार्ये कुपिते दीने सम्भ्रान्ते येन केनचित्।
तयोर्विरोधे संवृत्ते आचार्ययजमानयोः।।

वैष्णवं मुनिदैवत्यं वैष्वक्सेनं च वासवम्।
बार्हस्पत्यं यजेन्मन्त्रमष्टोत्तरशतं वशी।।

प्रसादयेद् गुरुं पश्चात् प्रसन्नो गुरुरत्वरः।
जपेदष्टोत्तरशतं प्रणवं तु समाहितः।।

यजेदष्टोत्तरशतं व्याहृतिं प्रणवान्विताम्।
इत्येवमर्चकस्यापि प्रायश्चित्तं विनिर्दिशेत्।।

तेषामन्यतमस्यापि प्रवृत्ते साहसे गुणे।
आत्मत्यागनिमित्ते वा मोचयेत् त्वरयान्वितः।।

प्रायश्चित्तयुते सोऽपि याचितः सहसा गुणात्।
एकभक्तश्च नक्ताशी घृताशी पञ्चगव्यभुक्।।

तोयाशी चोपवासी च दिनमेकं पृथक् पृथक्।
सप्तमे दिवसे स्नातस्तथैव जपहोमकृत्।।

ब्राह्मणान् भोजयित्वा तु किल्बिषात् स्वात् प्रमुच्यते।
यन्निमित्तं कृतमिदं तस्याप्येवं विनिर्दिशेत्।।

अन्यथा चेन्महादोष इति पूर्वजशासनम्।
प्रायश्चित्तमकृत्वा तु यदि पूजादिकर्मकृत्।।

प्रायश्चित्तावसाने तु देवदेवस्य भक्तितः।
द्विगुणं च समभ्यर्च्य द्विगुणं च निवेदयेत्।।

### ९.१.११७ आचार्याद्यपचारप्रायश्चित्तम्

**वि.६५.४०७**

आचार्यस्थापकादीनां भर्त्सनं (हननं) शपनं वा कृत्वा, वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, ब्राह्मं, सारस्वतं च हुत्वा, तान वस्था(नुज्ञा)प्य कार्यमारभेत।

**प्र.२७.७६, ७७ ; य.४५.२१ - २३**

**स.६९.१०३ - १०५**

आचार्यस्थापकादीनामृत्विजां च प्रमादतः।
भर्त्सनं शपनं वापि हननं वा कृतं यदि।।

येन केन महान् दोषः प्रायश्चित्तं विधीयते।
पौरुषं वैष्णवं ब्राह्मं सूक्तं सारस्वतं यजेत्।।

आचार्यस्यर्त्विजां तत्र यथोक्तं दक्षिणां ददेत्।
न दद्याद्यदि ते सर्वे यदि तत्फलमाप्नुयुः।।

**क्रि.२२.८६, ८७**

**वा.४६**

आचार्यत्रृत्विजश्चैव शपने भर्त्सने तथा।।

पौरुषं वैष्णवं चैव ब्राह्मं सारस्वतं यजेत्।

'क्षमस्वे'ति प्रणम्यैव पुनः कर्म समारभेत्।।

भूपरीक्षादिके कार्ये मध्ये चोद्यं यदाज्ञया ।

---------------------------------------

अनुक्तं चैव यत् सर्वम् आचरेदत्रिणोक्तवत्।।

अथवा काश्यपोक्तेन कारयेदिति केचन।

एवं संक्षेपतः प्रोक्तं प्रायश्चित्तं च निष्कृतिः।।

गुरुलाघवमालक्ष्य कुर्याच्चैव द्विजोत्तमाः।

**ज्ञा.१००.१९०**

यजमानाचार्यर्त्विगादिविरोधे येन केनचित् भर्त्सनशापनहननतर्जनादयः तेषां यदि वर्तन्ते तत्र ब्राह्मं पाञ्चभौतिकं वैष्णवं श्रीभूदैवत्यं रौद्रं सारस्वतं बार्हस्पत्यं हुत्वा आशीर्भिरभिनन्द्यारभेत।

**नि.३२**

[अत्र पाञ्चभौतिकमित्यस्य स्थाने पाञ्चहौत्रकमिति, श्रीभूदैवत्यमित्यस्य स्थाने भूमिदैवत्यमिति, सारस्वतमित्यस्य स्थाने विष्णुसूक्तमिति च दृश्यते।]

## ९.१.११८ कर्मकरविद्वेषे प्रायश्चित्तम्

**ज्ञा.१००.१९०**

तत्तत्कर्मकरविद्वेषेऽपि वैष्वक्सेनं जुहुयात्।

**नि.३२**

कर्मकरविरूप (विरोधे ?) वै वैष्णवं गारुडं यजेत्।।

***

## २. बेरनिर्माणदोषप्रायश्चित्तम्

### ९.२.१ बालालयबेरस्य प्रमाणादिलोपे प्रायश्चित्तम्

**वा.४४**

बालालयस्य बेरस्य प्रमाणे तस्य हीनके।
तस्य वै भूषणे हीने दोषमत्र न विद्यते।।
आत्मसूक्तं जपित्वा तु स्थापयित्वा तदर्चयेत्।

### ९.२.२ दारुसङ्ग्रहे विपरीतनिमित्तदर्शने प्रायश्चित्तम्

**ज्ञा.९८.१८७**

दारुसङ्ग्रहणकाले निमित्तेषु विपरीतेषु दृष्टेषु स्नात्वा महाशान्तिं हुत्वा अष्टाक्षरमष्टसहस्रमावर्त्य सौदर्शनेनात्मानमभिमृश्य दक्षिणां दत्त्वा कर्मारभेत।

**नि.३१**

दारुसङ्ग्रहणे काले निमित्ते विपरीतके।।
आचार्यः स्नातको दृष्टे शान्तिहोमं जुहोति वै।
आवर्त्याष्टाक्षरैर्मन्त्रैः अष्टसाहस्रकं जपेत्।।
सौदर्शनेन चात्मानमभिमृश्य समाचरेत्।

### ९.२.३ दारुसङ्ग्रहे वृक्षस्य अनिष्टदिक्पतने प्रायश्चित्तम्

**ज्ञा.९८.१८८**

अनिष्टदिक्पतने अन्यालाभे महाशान्तिं हुत्वा आहरेत।

**नि.३१**

### ९.२.४ दारुसङ्ग्रहे प्रोक्तदार्वलाभे प्रायश्चित्तम्

**स.६६.८६, ८७**

प्रोक्तदारोरलाभे तु दारुमन्यं च याज्ञिकम्।
गृहीत्वा पूर्ववच्चैव तद्दैवत्यं च हूयते।।

विष्णुसूक्तं च हुत्वा तु वैष्णवं जुहुयाच्छतम्।

**ज्ञा.९८.१८८**

उक्तवृक्षालाभे अन्यं वृक्षं सारवन्तमादाय शान्तिं हुत्वा निष्काधिकदक्षिणां दत्त्वा आहरेत।

**नि.३१**

### ९.२.५ दारुसङ्ग्रहे विपरीते प्रायश्चित्तम्

**क्रि.२०.११२, ११३**

दारुसङ्ग्रहकाले तु विपरीतं भवेद्यदि।
यजमानो गुरुः स्नात्वा तत्राब्जाग्निं प्रकल्प्य च।।

जुहुयाद्रात्रिसूक्तं तु श्रीसूक्तं वैष्णवं तथा।
वैष्णवं विष्णुसूक्तं च गृह्णीयात् पूर्ववत् पुनः।।

**स.६६.६७ - ६९**

दारुग्रहणकाले तु विपरीतं भवेद्यदि।।

स्नात्वा स्नानविधानेन यजमानयुतो गुरुः।

अब्जाग्नौ रात्रिसूक्तं तु विश्वजित्सूक्तमेव च।।

विष्णुसूक्तसमायुक्तं वैष्णवं जुहुयात् क्रमात्।

### ९.२.६ शिलादारुग्रहणे क्रियाविरहादौ प्रायश्चित्तम्

**वि.६४.३९७**

शिलाग्रहणकाले, दारुग्रहणकाले वा क्रियाहीने विपरीते च वैष्णवं, विष्णुसूक्तं, मिन्दाहुतिं विच्छिन्नं च व्याहृत्यन्तं जुहुयात्।

**प्र.२६.१२७, १२८**

### ९.२.७ बिम्बनिर्माणे प्रोक्तशिलाऽलाभे प्रायश्चित्तम्

**नि.३२**

तद्बिम्बोक्तशिलाऽलाभे मेदिन्यादि सुहूयताम्।
दिग्दैवत्यं क्रमाद्धुत्वा शान्तिहोमं सुहूयताम्।।

जपेदष्टाक्षरं मन्त्रमष्टसाहस्रकं बुधः।
अञ्जनाभां शिलामन्यां विष्णुमभ्यर्च्य चाहरेत्।।

**ज्ञा.९८.१८८**

उक्तशिलाऽलाभे अञ्जननिभामादाय हिरण्ये दिग्देवताभ्यो हुत्वा अष्टाक्षरमष्टसहस्रं जप्त्वा विष्णुमभ्यर्च्याहरेत्।

### ९.२.८ बिम्बनिर्माणे शिलागर्भदोषे प्रायश्चित्तम्

**नि.३२**

शिलायां गर्भमालक्ष्य तस्य दोषस्य शान्तये।
शान्तिं च विष्णुगायत्र्या हुनेदन्यां समाहरेत्।।

**ज्ञा.९८.१८८**

### ९.२.९ बिम्बनिर्माणे शिलाग्रहणक्रियालोपे प्रायश्चित्तम्

**वि.६२.३९२, ३९३**

शिलाग्रहणक्रियां विना बेरं सलक्षणं शिल्पिना कृतं चेत्, वैष्णवं शान्तिं हुत्वा, तद्बेरं भूमौ पिधाय, वास्तुहोमं हुत्वा, पर्यग्निपञ्चगव्याभ्यां संशोध्य, तद्बेरं परितः पूर्ववत्[1] बलिं दत्वा, देवान् समाराध्य, पश्चात् समन्त्रकं सङ्गृह्य, विधिना स्थापयेत्।

**प्र.२६.७० - ७३**

**क्रि.२०.२०२ - २०४**

अकृत्वा कल्पिते बेरे शिलासङ्ग्रहणक्रियाम्।।

पौण्डरीके महाशान्तिम् एकाहं जुहुयात् पुनः।
शिलाग्रहणहोमं च हुत्वा मन्त्रं स्पृशन् जपेत्।।

अज्ञानात् स्थापितं चैतत् एवं कृत्वा यथाविधि।
प्रतिष्ठोक्तक्रमेणैव प्रतिष्ठां पुनराचरेत्।।

### ९.२.१० बिम्बनिर्माणे शिलामुखाद्यपरिज्ञाने प्रायश्चित्तम्

**स.६७.३ - ९**

शिलाया वाथ दारोर्वा मुखं पार्श्वं तथैव च।।

दृष्टिमूर्ध्वमधः सम्यग्ज्ञात्वैव स्थापयेद् बुधः।
अज्ञानात्तु विपर्यासं देवरूपं कृतं यदि।।

स्थापितं तु तदज्ञानादाभिचारिकमुच्यते।
राष्ट्रस्य यजमानस्य राज्ञो दोषो भवेन्महान्।।

---

1. शिलासङ्ग्रहाङ्गबलिदानवत्

प्रजापीडा भवेत् क्षिप्रं व्याधिर्मरणमेव च।
तस्मात् सर्वप्रयत्नेन क्षिप्रं शान्तिं च कारयेत्।।

आलयस्योत्तरे कुर्यादब्जाग्निं च सलक्षणम्।
हुत्वा तु पौरुषं सूक्तमतोदेवादि वैष्णवम्।।

ईंकारादींश्च जुहुयादङ्गहोममतः परम्।
पञ्चवारुणसंयुक्तं जयाद्यातानसंयुतम्।।

परिषद्देवतानां च क्रमान्मन्त्रैः सुहूयताम्।
पूर्ववद्विधिना कृत्वा स्थापयेत् तद्विचक्षणः।।

**क्रि.२०.१४९ - १५३**

### ९.२.११ मधूच्छिष्टक्रियायां मन्त्रलोपे प्रायश्चित्तम्

**ज्ञा.९९.१८९**

मन्त्रहीने मधूच्छिष्टे विधानेन अब्जाग्नौ ब्राह्मं प्राजापत्यं सौरं सौम्यं वैष्णवान्तं हुत्वा ब्राह्मणानन्नेन परितोष्य शक्तितो दक्षिणां दत्त्वा आरभेत।

### ९.२.१२ मधूच्छिष्टक्रियाहानौ प्रायश्चित्तम्

**स.६८.२९ - ३१**

मधूच्छिष्टक्रियाहीने प्रायश्चित्तं यजेत् क्रमात्।
ब्राह्मं सौरं च सौम्यं च सारस्वतसमन्वितम्।।

प्राजापत्यं च जुहुयादाग्नेयं चैव हूयते।
वैष्णवं चैव जुहुयात् महाव्याहृतिसंयुतम्।।

ब्राह्मणान् भोजयित्वा तु गुरवे दक्षिणां ददेत्।

**क्रि.२१.३९ - ४१**

ब्राह्मणान् भोजयित्वा तु गुरवे दक्षिणां ददेत्।

**क्रि.२१.३९ - ४१**

**वि.६४.४००**

मधूच्छिष्टक्रियां विना बेरं कृतं चेत्, वैष्णवं, ब्राह्मं, रौद्रं, सौरमाग्नेयं च प्रायश्चित्तं यजेत्।

**प्र.२६.१५९**

**य.४८.२१**

मधूच्छिष्टक्रियाहीने वैष्णवं ब्राह्मसंयुतम्।
शान्तिं हुत्वा तथा धीमान् लोहसंस्कारकेऽपि वा।।

### ९.२.१३ बिम्बनिर्माणे उपादानद्रव्ययोजनक्रियालोपादौ प्रायश्चित्तम्

**ज्ञा.९८.१८८**

काष्ठमृद्रज्जुशर्कराम्बरवर्णादीनां योगकाले क्रियाहीने विपर्यासे शान्तिं हुत्वा देवमनुज्ञाप्य दक्षिणां दत्त्वा आरभेत।

### ९.२.१४ बिम्बनिर्माणे दोषदूषितमृदाहरणे प्रायश्चित्तम्

**स.६७.२० - २२**

पक्षिश्वानर्हपश्वाद्यैः कपिसूकरमूषकैः।
दूषितां मृत्तिकां चेत्तु त्यक्त्वाऽन्यां विधिनाऽऽहरेत्।।

भूदैवत्यं च हुत्वा तु पारमात्मिकसंयुतम्।
ईंकारादींस्ततो हुत्वा यद्देवादिसमन्वितम्।।

### ९.२.१५ बिम्बनिर्माणे स्नेहद्रव्यलोपादौ प्रायश्चित्तम्

**वि.६४.३९८**

स्नेहद्रव्यचूर्णकषायौषधिषु हीनेषु प्रयोगविपर्यासे च, रज्जुबन्धाष्टबन्धमृदालेपनघटीशर्करालेपनपटाच्छादनाभरणादिषु क्रमहीनेषु वर्णव्यतिक्रमे च, वैष्णवं ब्राह्मम्, ऐन्द्रम्, आग्नेयं, महाभूतदैवत्यं प्राजापत्यं च व्याहृत्यन्तं हुत्वा, यथाविधि यथास्थाने क्रमेण कारयेत्।

**प्र.२६.१३९ - १४१**

**स.६७.२२ - २६**

मृदां स्नेहस्य चूर्णस्य कषायाद्यौषधस्य च।।
न्यूने संस्कारहीने च प्रयोगस्य विपर्यये।
रज्जुबन्धेऽष्टबन्धे च शर्करालेपने तथा।।
न्यूने विपर्यये हीने प्रयोगस्य विपर्यये।
वैष्णवं पौरुषं चैव पाञ्चभौतिकसंयुतम्।।
ब्राह्ममैन्द्रं त्रयस्त्रिंशद्देवताभ्यश्च हूयते।
पूर्वोक्तेन विधानेन तत्तत्कर्म समाचरेत्।।
वर्णव्यतिक्रमे चैव प्राजापत्यं सपौरुषम्।

**क्रि.२०.१६० - १६३**

### ९.२.१६ बेरे कृत्रिमवर्णलेपे प्रायश्चित्तम्

**स.६७.३५ - ३७**

बेरे तु कृत्रिमं वर्णमज्ञानाल्लेपयेद्यदि।
निर्यासेन कपित्थस्य युक्ताद्भिः क्षालयेत् पुनः।।

प्लोतवस्त्रेण संमृज्य पौण्डरीके सुहूयते।
तस्माद्वैश्वानरं सूक्तं विष्णुसूक्तसमन्वितम्।।

ब्राह्मं च वैष्णवं हुत्वा जयाद्यैश्च सुहूयते।
तस्यानुसारवर्णांश्च लेपयेच्च विधानतः।।

**क्रि.२०.१७४ - १७६**

**प्र.२६.१४३ - १४५**

कृत्रिमेणाप्यनुक्तेन वर्णेनालेपितं पुनः।।

बेरं प्रक्षाल्य निर्यासवारिणा परिमार्ज्य च।
वैष्णवं विष्णुसूक्तं च हुत्वाऽब्जाग्नौ जयादिकान्।।

पश्चाद्यथोक्तवर्णेन यथार्हमनुलेपयेत्।

**वि.६४.३९९**

### ९.२.१७ बेरशूलानां मानवैकल्ये प्रायश्चित्तम्

**वि.६४.३९८**

बेरोक्तशूलानां प्रत्येकं तदुक्तमानद्वित्रिचतुष्पञ्चषड्यवमानं हीनं चेत् ताम्रेण सम्पूर्णं कृत्वा, वैष्णवं पुरुषसूक्तं, 'दद्भ्यः स्वाहे' त्यङ्गहोमं च हुत्वा, पुनरारभेत।।

**प्र.२६.१३७, १३८**

**स.६७.१० - १२**

उपबाह्वोः प्रकोष्ठे च हस्ते हस्ततले तथा।
ऊर्वोस्तथैव जङ्घायां पादे पादतले तथा।।

तथैव पार्श्वदण्डे च कक्षवक्षःस्थलेऽपि च।

[1]दारोः प्रमाणं हीनं च अधिकं च न चाचरेत्।।

साङ्गोपाङ्गेषु सर्वत्र हीनं चैकाङ्गुलं तथा।
हेम्ना वा रजतेनापि ताम्रेणैवाथ पूरयेत्।।

## ९.२.१८ रत्नन्यासे मन्त्रलोपे प्रायश्चित्तम्

**ज्ञा.९८.१८८**

रत्नानां सङ्कुले मन्त्रहीने वैष्णवं जुहुयात्।

## ९.२.१९ शूलस्थापनविपर्यासे प्रायश्चित्तम्

**वि.६४.३९८**

ध्रुवबेरार्थं --------------- शूलस्थापनविपर्यासे च ब्राह्मं, रौद्रं, वैष्णवं व्याहृत्यन्तं हुत्वा, विधिना संयोजयेत्।

**स.६६.९१, ९२**

शूलं विपर्ययेणैव स्थापयेद्यदि नश्यति।
देवालयादुत्तरतः पूर्वोक्तं होममाचरेत्।।

हुत्वा तु पौरुषं सूक्तं दक्षिणां च ददेत् पुनः।
यथोक्तेन विधानेन शूलं कृत्वा विचक्षणः।।

**क्रि.२०.१५६, १५७**

**स.६७.१३ - १५**

शूलं विपर्ययेणैव स्थापयेद्यदि नश्यति।
देवालयादुत्तरतः पूर्वोक्तं होममाचरेत्।।

1. शूलदारुणः

हुत्वैव पौरुषं सूक्तं दक्षिणां च ददेत् पुनः।
यथोक्तेन विधानेन शूलं कृत्वा विचक्षणः।।

ब्राह्मणान् भोजयित्वा तु पूर्ववत् स्थापयेत् क्रमात्।

**ज्ञा.९८.१८८**

शूल --------------- विपर्यासे सहस्राहुतिं हुत्वा शान्तिं संवाच्य आशीर्भिराघोष्य देवमनुमान्य दक्षिणां दत्त्वा आरभेत।

## ९.२.२० बिम्बनिर्माणे शूलस्थापनलोपे प्रायश्चित्तम्

**क्रि.२०.११४ - ११९**

शूलसंस्थापने हीने समाप्ते सति मन्दिरे।
भवेत् पिशाचावासः सः वास्तुहोमं यजेत् पुनः।।

पौण्डरीके तु तन्मध्ये महाशान्तिं जुहोति च।
हिरण्यपशुभूम्यादीन् दत्वा कर्म समारभेत्।।

एकमासे भवेदेवं द्विमासे द्विगुणं भवेत्।
एवं संवर्धयेत् प्राज्ञो यावत्संवत्सरावधि।।

संवत्सरेऽप्यतीते तु महाशान्तिं जुहोति च।
हिरण्यपशुभूम्यादीन् दत्वा विप्रांश्च भोजयेत्।।

एवमाद्येष्टकादीनां हुत्वा तत्तन्मनुं स्मरन्।
तत्तन्मन्त्रजपं कृत्वा शूलं संस्थापयेत् पुनः।।

मासमेकं महाशान्तिं द्वादशाब्दात् परं यजेत्।
कर्षणादीनि कर्माणि कुर्यात् सर्वाणि पूर्ववत्।।

**वि.६४.३९८**

ध्रुवबेरार्थं शूलाग्रहणे --------------- ब्राह्मं, रौद्रं, वैष्णवं व्याहृत्यन्तं हुत्वा, विधिना संयोजयेत्।

**ज्ञा.९८.१८८**

शूलकल्पनाहीने --------------- सहस्राहुतिं हुत्वा शान्तिं संवाच्य आशीर्भिराघोष्य देवमनुमान्य दक्षिणां दत्त्वा आरभेत।

## ९.२.२१ शूलकल्पनलोपादौ प्रायश्चित्तम्

**नि.३१**

शूलकल्पनयोर्हीने विपर्यासे तथैव च।
सहस्राहुति संयुक्तं वैष्णवं च सुहूयताम्।।
पुण्याहं वाचयित्वा तु दक्षिणां च ददेत् पुनः।

## ९.२.२२ शूलस्थापने यजमानविपर्यासे प्रायश्चित्तम्

**स.६७.१५**

यजमानविपर्यासे चैन्द्रं रौद्रं यजेत् तथा।।

**खि.३४.३१**

## ९.२.२३ ध्रुवबेरक्रियालोपे प्रायश्चित्तम्

**क्रि.२०.१२० - १२९**

ध्रुवबेरक्रियाहीने शूले संस्थापिते यदि।
जुहुयात् पौण्डरीकाग्नौ विष्णुसूक्तमनुस्मरन्।।
विच्छिन्नं चैव हुत्वा तु मिन्दाहुत्या च हूयताम्।

हुत्वा तु सप्तसमिधो देवेशमनुमान्य च।।
भूमिं च गुरवे दत्त्वा तत्तत्कर्म समाचरेत्।
एवं मासे तु सम्प्रोक्तं द्वितीये द्विगुणं भवेत्।।

वर्धयेदेवमेवैतत् यावत्संवत्सरावधि।
संवत्सरेऽप्यतीते तु पौण्डरीकं च कारयेत्।।

कुर्यादाहवनीयादीन् चतुर्दिक्षु यथाक्रमम्।
आघारान्ते तु होतव्ये सहस्राहुतिवैष्णवे।।

विष्णुसूक्तं च जुहुयात् तत्तद्धोमे शताष्टकम्।
दिग्दैवत्यं च हुत्वा तु दक्षिणां च ददेत् तथा।।

विप्राणां भोजनं कृत्वा दक्षिणां च स्वशक्तितः।
द्वितीये द्विगुणं चैव वर्धयेद् द्वादशावधि।।

द्वादशाब्दे व्यतीते तु कर्षणादीनि कारयेत्।
पौण्डरीके तु कूष्माण्डं पञ्चवारुणसंयुतम्।।

पारमात्मिकमींकारान् अङ्गहोमं ततः परम्।
पौरुषं विष्णुसूक्तं च हुत्वा विप्रांश्च भोजयेत्।।

पञ्चनिष्कसुवर्णं च दद्यादाचार्यदक्षिणाम्।
वास्तुहोमं ततो हुत्वा पुण्याहमपि वाचयेत्।।

**ज्ञा.९७.१८७**

सम्यक् संहिते विमाने त्वनारब्धे ध्रुवरूपे अब्दातीते महाशान्तिं हुत्वा सहस्रभोजनं च कृत्वा शक्तितो दक्षिणां दद्यात्। शून्ये तथाऽब्दे द्विगुणं द्विगुणमारभेत्। द्वादशाब्देषु विष्णुयागं कृत्वा हरिबेरं शाङ्करबेरं वा दशाब्दे द्वादशाब्दे वा समारभेतेति विज्ञायते।

## ९.२.२४ ध्रुवबेरे निषिद्धद्रव्यकृते प्रायश्चित्तम्

**वि.६४.३९८, ३९९**

मृण्मयं महाबेरमर्धचित्रं न कुर्वीत। सौवर्णं राजतं ताम्रजं शिलाजं दारवं रत्नजं वा अर्धचित्रं वा कारयेत्। -----------------इष्टकाकल्पितं ध्रुवबेरं सुधयायुक्तं, नपुंसकवृक्षेण नपुंसकशिलया वा कृतं, अयः पाषाणचूर्णलशुन-हिङ्गुतैलाद्यैः संयुक्तं, पक्वमृण्मयं, शूलोपरि रज्जुबन्धहीनं, मृद्धीनं, घटीशर्करा-कल्कहीनं प्रमाणहीनमुक्तवर्णहीनं भूषणहीनम्, अज्ञानादर्थलोभाद्वा स्थापितं चेत्, तदाभिचारिकं भवति।

तच्छीघ्रमपहाय, पद्माग्नौ वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, श्रीभूमिदैवत्यं, यद्देवादीन् ब्राह्मं, रौद्रम्, ऐन्द्रम्, आग्नेयं, वारुणं, सर्वदैवत्यं, पारमात्मिकं च जुहुयात्। एषा महाशान्तिः सर्वदोषोपशमनी भवति। पश्चाद् बेरं विधिवत् संस्कृत्य, विधिना स्थापयेत्।

**प्र.२६.१४२, १४३, १४५ - १४९**

**क्रि.२०.१६४ - १६६, १८८ - २०२**

अर्धचित्रं न कुर्वीत मृण्मयं लोहजं तथा।
स्थापितं च विसृज्यान्यत् बेरं सङ्गृह्य यत्नतः।।

पद्माग्नौ ब्रह्मसूक्तं च वैष्णवा 'श्रावि' तादिकम्।
हुत्वा मिन्दाहुती विप्रान् भोजयित्वा ततः परम्।।

पूर्वोक्तेन विधानेन स्थापयेदिति शासनम्।
शिलाजं मणिजं बिम्बमर्धचित्रं न दोषकृत्।।

---------------------------------------

इष्टकाभिः सुधाभिर्वा कण्टकाद्यैर्नपुंसकैः।।

अन्यैश्च काष्ठैर्वृक्षैर्वाप्यन्यैर्दूषितदारुभिः।

कालायसैश्च पाषाणैः चूर्णैर्वापि समायुतैः।।

संयुक्ते तु कृते बेरे कृतेऽपक्के तु मृण्मये।
पैशाचैश्चासुरैर्द्रव्यैरतिरिक्तमृदाऽथवा।।

द्रव्यैरसंस्कृतैर्वापि ध्रुवबेरे प्रकल्पिते।
अशूले रज्जुमृद्वस्त्रशर्करादावमानके।।

कृशे स्थूलेऽतिजीर्णे च वृद्धौ वाऽनुक्तवर्णके।
सुधयैव कृते बेरे तथैवेष्टकया कृते।।

कल्पितेऽनुक्तद्रव्येण कृत्रिमाभरणान्विते।
इत्यादि दोषसंयुक्ते बेरे सर्वं विनश्यति।।

स्थापयेच्चेत् तदज्ञानात् यजमानो विनश्यति।
तच्छान्तिः पौण्डरीकाग्नौ आलयस्योत्तरे कृते।।

पारमात्मिकमींकाराद्यष्टाशीत्यङ्गहोमकम्।
ब्रह्मसूक्तसमायुक्तं श्रीसूक्तेन समन्वितम्।।

दुर्गासूक्तं च जुहुयात् विष्णुसूक्तमतः परम्।
जुहुयात् पौरुषं सूक्तं विश्वजित्सूक्तमेव च।।

प्राजापत्यं च रौद्रं च ब्राह्ममाग्नेयमेव च।
सौरं सौम्यसमायुक्तं वैष्णवं जुहुयात् पुनः।।

ब्राह्मणान् भोजयित्वा तु दद्यादाचार्यदक्षिणाम्।
बालालये प्रतिष्ठाप्य सदोषमपहाय च।।

सलक्षणं ततः कृत्वा स्थापयेत् पूर्ववत् क्रमात्।
तद्विमानगलस्थाने पादवर्गस्य मध्यमे।।

कारयेद्विहितां मूर्तिं सुधयेष्टकयाथवा।
मृच्छूलशर्कराराज्जुवस्त्रे हीनेऽप्रमाणके।।

कृते कृत्रिमवर्णेन दोषैः कार्श्यादिभिर्युते।
न दोषदा इति प्रोक्ताः यदि ते शिलया कृताः।।

सर्वलक्षणसम्पन्नान् वर्णहीनान् प्रकल्पयेत्।

**स.६७.२६ - ३०, ६८.३१ - ४४**

अर्धचित्रं न कुर्वीत लोहजं मृण्मयं तथा।।

दारवं च तथा बेरमाभिचारिकमेव च।
स्थापितं च विसृज्यान्यं बेरं सङ्गृह्य यत्नतः।।

अब्जाग्निमध्ये जुहुयाद् ब्रह्मसूक्तं सवैष्णवम्।
विच्छिन्नं चैव हुत्वा तु यजेन्मिन्दाहुतिं पुनः।।

ब्राह्मणान् भोजयित्वा तु दक्षिणां तु ददेद् गुरोः।
पूर्वोक्तेन विधानेन स्थापयेदिति शासनम्।।

शैलजं मणिबिम्बं च अर्धचित्रं न दोषकृत्।
पुंशिलाभिस्तु पुरुषं स्त्रियः स्त्रीभिस्तु कारयेत्।।

स्त्रीभिर्नपुंसकैर्वाथ ध्रुवबेरं कृतं यदि।
आभिचारिकमित्युक्तं तेन सर्वं विनश्यति।।

स्थापितं च परित्यक्त्वा बेरमन्यं समाहरेत्।
नपुंसकशिलाबेरं देवीयुक्तं परित्यजेत्।।

त्यक्त्वा चान्यत् समादाय प्रायश्चित्तं यजेद् बुधः।
यथोक्तशिलया बेरं प्रगृह्य च विधानतः।।

पञ्चाग्नीन् साधयित्वा तु पौण्डरीकाग्निसंयुतान्।
आघारं पूर्ववत् कृत्वा तानग्नीन् परिषिच्य च।।

पारमात्मिकसंयुक्तमींकारादि च हूयते।
अष्टाशीतिं च हुत्वैव जयादि जुहुयात् पुनः।।

रात्रिसूक्तं च जुहुयाद्विश्वजित्सूक्तमेव च।
ब्राह्ममन्त्रं च हुत्वा तु विष्णुसूक्तं च हूयते।।

पुरुषसूक्तं रौद्रं च दुर्गासूक्तमतः परम्।
जुहुयात् तत्क्रमेणैव सर्वहोमे शताष्टकम्।।

पद्महोमं च जुहुयात् पाञ्चभौतिकसंयुतम्।
पुण्याहं वाचयित्वैव ब्राह्मणान् भोजयेत् ततः।।

गवादिभूमिदानं च कृत्वा चात्र विधानतः।
वस्त्रोत्तरीयाभरणैर्हेमपुष्पाङ्गुलीयकैः।।

कुण्डलाभरणैरन्यैराचार्यं पूजयेत् ततः।
एवं कृत्वा महाशान्तिं पश्चात् स्थापनमाचरेत्।।

एकमेव विधिं वक्ष्ये प्रायश्चित्तं तदुत्तमम्।
ननु चैव शिला दृष्ट्वा सिराविवरवर्जिताः।।

ग्रन्थियुक्ताः सगर्भाश्च रूक्षाश्छिन्नाश्च वर्जिताः।
स्फुटिता वक्रजास्तास्ताः अधिकाः स्थूलमूर्तयः।

मृदवो लघवश्चैव लघुशब्दविवर्जिताः।
शिलाजेषु च दोषेषु सर्वत्रैव विधिः स्मृतः।।

**क्रि.२१.४१ - ५०**

**स.६७.५२ - ७०**

इष्टकाभिः सुधाभिर्वा कण्टकक्रिमिसंयुतैः।।

अन्यैश्च काष्ठैर्मृद्भिश्च असन्मृद्भिश्च दूषितैः।
दूषिताभिः शिलाभिर्वा दोषयुक्तैश्च दारुभिः।।

कालायसैश्च पाषाणैश्चूर्णैर्मृद्भिः समायुतम्।
लशुनैश्च शणैरन्यैरयुक्तैर्यैश्च कैश्च वा।।

संयुक्तं तु कृते बेरे कृते पक्वेऽथ मृण्मये।
पैशाचैरासुरैर्द्रव्यैरतिरिक्तमृदाऽथ वा।।

अतिकृष्णमृदा वापि बेरे दोषसमायुते।
अशूले रज्जुहीने च मृद्धीने चाप्रमाणतः।।

अथवा शर्कराहीने वस्त्रहीने तथैव च।
कृशे स्थूले च दीर्घे च ह्रस्वे चानुक्तवर्णके।।

सुधयैव कृते बेरे तथैवेष्टकया कृते।
अन्यानुक्तकृते वापि कृत्रिमाभरणान्विते।।

एतैर्दोषैः समायुक्ते महाबेरे कृतेऽपि च।
आभिचारिकमित्युक्तं सर्वनाशस्तदा भवेत्।।

प्रतिष्ठितं चेदज्ञानाद्यजमानो विनश्यति।
प्रजापीडा भवेन्नित्यं व्याधिश्च मरणं भवेत्।।

युद्धं घोरं भयं चैव बाधाः सर्वा भवन्ति च।
तस्मात् सर्वप्रयत्नेन क्षिप्रं शान्तिं च कारयेत्.।

आलयस्योत्तरे कुर्यादब्जाग्निं च सलक्षणम्।

अग्निं प्रज्वाल्य विधिना परिषिच्य ततः क्रमात्।।

पारमात्मिकमींकारानष्टाशीत्यङ्गहोमकम्।
ब्रह्मसूक्तसमायुक्तं श्रीसूक्तेन समायुतम्।।

दुर्गासूक्तं च जुहुयाद्विष्णुसूक्तमतः परम्।
पुरुषसूक्तं च हुत्वैव विश्वजित्सूक्तमेव च।।

प्राजापत्यं च सौम्यं च ब्राह्ममाग्नेयमेव च।
सौम्यं सौरसमायुक्तं वैष्णवं जुहुयाद् बुधः।।

एवं हुत्वा महाशान्तिं समस्तदुरितापहम्।
ब्राह्मणान् भोजयित्वा तु दक्षिणां तु ददेत् पुनः।।

ऋत्विजः पूजयित्वैव वस्त्राभरणकुण्डलैः।
आचार्यं पूजयित्वैवं स्वर्णनिष्कत्रयं ददेत्।।

बालालये च देवेशं प्रतिष्ठाप्य विधानतः।
बेरं तु दोषयुक्तं चेद्वर्जयेत् तत् प्रयत्नतः।।

सलक्षणं च कृत्वा तु स्थापयेत् पूर्ववत् क्रमात्।
शिलाग्रहणवद्धुत्वा दारुजं चेद्ध्रुवं पुनः।।

हुत्वा चाग्नौ महाशान्तिं पश्चात् कर्म समाचरेत्।

**स.६८.१ - ४**

आयसैश्चारकूटैश्च त्रपुलोहैश्च मिश्रितैः।
कौतुकं च कृतं चेत् तदाभिचारिकमुच्यते।।

अज्ञानात् स्थापिते चैव सर्वं चाशु विनश्यति।
तद्विसृज्य च पद्माग्नौ मन्त्रैः परिषदामपि।।

पौरुषं वैष्णवं सूक्तं ब्रह्मसूक्तं च हूयते।
श्रीसूक्तं च महीसूक्तं व्याहृत्यन्तं च हूयते।।

दक्षिणां च ततो दद्याद् ब्राह्मणान् भोजयेत् ततः।
सलक्षणं च तत् कृत्वा कौतुकं स्थापयेद् बुधः।।

### ९.२.२५ ध्रुवबेरस्य विध्याद्यतिक्रमेण कल्पने प्रायश्चित्तम्

**स.६८.४७ - ५६**

अविधिकमलक्षण्यमयुक्तं चाप्रयोजकम्।।

विरूपं वा विवर्णं वाप्यन्यद् भूषणसंयुतम्।
तत् त्यक्त्वा विधिना कृत्वा लक्षणेन समायुतम्।।

तदालये प्रतिष्ठाप्य शान्तिहोमं च हूयते।
आलयाद्दक्षिणे कुर्यादब्जाग्निं च सलक्षणम्।।

आघारं पूर्ववत् कुर्यादग्निं प्रज्वाल्य पूर्ववत्।
अङ्गहोमं ततो हुत्वा तद्दैवत्यसमन्वितम्।।

तदालयगतानां च सर्वेषां चैव हूयते।
व्याहृतिं तत्र जुहुयाद्विष्णुसूक्तसमन्वितम्।।

ब्राह्मं पुरुषसूक्तं च वैष्णवं च सुहूयताम्।
पद्महोमं च कर्तव्यं पारमात्मिकसंयुतम्।।

एवमेव च हुत्वा तु दक्षिणां च ददेत् पुनः।
ब्राह्मणान् भोजयित्वा तु पश्चात् स्थापनमाचरेत्।।

कर्तुः स्मृतियुतं यत्र तत्रैवैष विधिक्रमः।
दैविके चालये चार्षे क्षेत्रे नैव विधिर्भवेत्।।

अविधिकमलक्षण्यमप्रमाणं न दोषकृत्।
तस्मात् सर्वप्रयत्नेन यथा पूर्वं तथा चरेत्।।

अन्यथा चेन्महादोष इति पूर्वजशासनम्।
**क्रि. २९. ५३ - ६०**

### ९.२.२६ ध्रुवबेरनिर्माणादिविपर्यासे प्रायश्चित्तम्

**प्र.२६.१३४, १३५**

ध्रुवबेरस्य निर्माणे शूलग्रहणकर्मणि।
स्थापने वा विपर्यासे ब्राह्मं रौद्रं च वैष्णवम्।।

व्याहृत्यन्तं च हुत्वैव विधिना योजयेत् पुनः।

### ९.२.२७ ध्रुवबेरस्य प्रमाणलोपे प्रायश्चित्तम्

**वि.६३.३९५**

ध्रुवबेरं मानहीनं चेत्, अग्निं परिस्तीर्य, ध्रुवस्थापनोक्तवद्धोमं हुत्वा, पूर्ववद्रत्नन्यासमन्त्रान्, स्थापनसूक्तं च जप्त्वा, संस्थाप्य, नवीकरणं कृत्वा कौतुकादिभिः सह प्रतिष्ठां कारयेत्।

**प्र.२६.१०३, १०४**

### ९.२.२८ ध्रुवरूपविपर्यासादौ प्रायश्चित्तम्

**नि.३२**

ध्रुवरूपविपर्यासे मानहीने च कौतुके।
अन्यालयगते चैव स्थापिते च प्रमादतः।।

तद्ग्रामानर्थदं विद्यात् राजराष्ट्रं विनश्यति।
तस्मात् तदपहायैव महाशान्तिं त्र्यहं यजेत्।।

तदाहं (?) स्थावरं चैव कौतुकं स्थापयेद्बुधः।

### ९.२.२९ ध्रुवबेरस्य प्रत्यङ्गलोपे प्रायश्चित्तम्

**स.६७.३० - ३४**

शैलजं ध्रुवबेरं च वर्णयुक्तं च कारयेत्।।

वस्त्रमाभरणं पद्मं किरीटं शङ्खचक्रकौ।
उपवीतं प्रलम्बं च श्रीवत्सं कुण्डलद्वयम्।।

एवमाद्यैश्च संयुक्तं बिम्बं कुर्याद्विशेषतः।
एतैर्हीनं यदि स्याच्चेत् पुनरेतैः समायुतम्।।

कारयित्वैव जुहुयाद्वैष्णवं ब्राह्मसंयुतम्।
ऐन्द्रं च विष्णुसूक्तं च सौरं सौम्यसमायुतम्।।

हुत्वा च पौरुषं सूक्तं ब्राह्मणान् भोजयेत् पुनः।
पूर्वोक्तविधिना सम्यक् पुनः स्थापनमाचरेत्।।

**क्रि.२०.१७१ - १७४**

### ९.२.३० ध्रुवबेरस्य जलाधिवासात् पूर्वमङ्गहानौ प्रायश्चित्तम्

**प्र.२६.६७ - ७०**

जलाधिवासनात् पूर्वम् अङ्गहानौ ध्रुवस्य तु।।

वैष्णवं विष्णुसूक्तं च सूक्तं पौरुषमेव च।
हुनेच्छ्रीभूमिदैवत्यं 'दद्भ्यः स्वाहा' दिकं तथा।।

आचार्यदक्षिणां दद्यात् बेरं सम्यक् परीक्षयेत्।
सन्धानयोग्यं सन्दध्यात् पुनः कार्यं समाचरेत्।।

शक्तश्चेन्नूतनं बेरम् आहृत्य तु समाचरेत्।

**वि.६२.३९२**

### ९.२.३१ कौतुकबिम्बे निषिद्धद्रव्यकृते प्रायश्चित्तम्

**क्रि.२१.१० - १३, २२ - २४**

अतः परं प्रवक्ष्यामि कौतुकादिषु निष्कृतिम्।
कृत्वा सङ्कीर्णलोहेन लोहेनाविहितेन वा।।

कौतुकं स्थापयेच्चेत्तु क्षिप्रं तदपहाय च।
पद्माग्नौ परिषन्मन्त्रान् सूक्ते पौरुषवैष्णवे।।

श्रीब्रह्मरुद्रसूक्तानि व्याहृत्यन्तं हुनेत् पृथक्।
दक्षिणां तु ततो दद्यात् ब्राह्मणानपि भोजयेत्।।

सलक्षणं ततः कृत्वा कौतुकं स्थापयेद् बुधः।
------------------------------------------ ।

सुवर्णादन्यलोहेन मिश्रलोहेन कौतुकम्।
स्थापितं चेन्महादोषः भविष्यति न संशयः।।

आलयाद्दक्षिणेऽब्जाग्नौ ब्राह्मं सौरं च सौम्यकम्।
आग्नेयं गारुडं हुत्वा सूक्ते वैष्णवपौरुषे।।

ईकारादीन् ततो हुत्वा तद्बिम्बमपहाय च।
उक्तलोहेन कृत्वा तु विधिना स्थापयेत् पुनः।।

**स.६८.१३ - १६**

**वि.६४.३९९**

आरकूटायोवृत्तलोहाद्यनुक्तद्रव्यैः कृतं कौतुकादि बेरम् अज्ञानात् स्थापितं चेत् तदाभिचारिकं भवति। तद्दोषशमनार्थं महाशान्तिं हुत्वा, बेरं सलक्षणं कृत्वा, विधिना स्थापयेत्। कौतुकं स्थितमासीनं वा कारयेत्। नैव शयानं। दैविके चार्षे पौराणिके च यथा पूर्वं तथा चरेत्। अन्यथा दोषो भवति।

**प्र.२६.१४९ - १५१**

**ज्ञा.९९.१८९**

जातरूपं विना अन्यलोहमिश्रितं बिम्बं न स्थापयेत्। स्थापिते तदपनीय पूर्ववद्धुत्वा अन्यं (न्यत्)? संस्थापयेत्।

**य.४८.१७, १८**

अनुक्तलोहैः संयोज्य कौतुकादींश्च मोहतः।
कृत्वा संस्थापितं चेत्तद् भवत्येवाभिचारिकम्।।

तद्दोषशमनार्थाय महाशान्तिं तथा बुधः।
कृत्वा ------------------------------।।

## ९.२.३२ कौतुकबिम्बे ध्रुवानुरूप्यविपर्यासादौ प्रायश्चित्तम्

**ज्ञा.९९.१८८**

अथ ध्रुवस्यानुरूप्यविपर्यासे कौतुके प्रमाणहीने अन्यालयकृते नृपराष्ट्रविनाशाय भवति। तस्मादपनीय महाशान्तिं त्रिरात्रं हुत्वा देवं स्थापयेत्। स्थापिते नवे कौतुके अन्यस्मिन् पश्चात् अन्यसंवेशनं नाचरेत्।

## ९.२.३३ कौतुकबिम्बे लौहगौरवे प्रायश्चित्तम्

**ज्ञा.९९.१८८**

लोहगौरवं कुर्याच्चेत् शान्तिं हुत्वा [1]पूर्ववदाचरेत्।

## ९.२.३४ शैलजध्रुवकौतुकयोः वर्णलोपे प्रायश्चित्तम्

**स.६७.४० - ४३**

ध्रुवं तु कौतुकं वापि स्थापितं तु शिलामयम्।
वर्णयुक्तं पुनः कुर्यात् तद्धीने कोपकृद्धरिः।।

---

1. ध्रुवानुरूप्यविपर्यासवत्।

वर्णे विवर्णे सम्प्राप्ते पीठं कृत्वा तु मध्यमे।
यावद्वर्णस्य संयोगः तावत्कालं तु पूजयेत्।।

पीठे वा कौतुके वापि विष्णुसूक्तं सवैष्णवम्।
ब्राह्मं च वैष्णवं हुत्वा जयाद्यैश्च सुहूयताम्।।

ईकारादीन् ततो हुत्वा पारमात्मिकसंयुतम्।
अष्टाशीतिं ततो हुत्वा वर्णयुक्तं पुनश्चरेत्।।

## ९.२.३५ कौतुकादिबेरवैरूप्यादौ प्रायश्चित्तम्

**वि.६४.४००**

अर्च्यमाने कौतुकादिबेरे विरूपे, विवर्णे, जर्झराद्यैर्युक्ते वा तच्छक्तिं महाबेरे समारोप्य, नवीकृत्य, बिम्बशुद्धिं कृत्वा, पुनः स्थापयेत्।

**प्र.२६.१५४, १५५**

## ९.२.३६ कौतुकाद्यलाभे प्रायश्चित्तम्

**वि.६५.४०८**

कौतुकादीनामलाभे सुवर्णं निक्षिप्य, वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, वायव्यं, दिग्देवत्यं च जुहुयात्।

**प्र.२७.९५**

## ९.२.३७ परिवारबिम्बे ध्रुवबेरद्रव्यातिरिक्तद्रव्यकृते प्रायश्चित्तम्

**स.६९.१२६ - १३२**

यद्यद् द्रव्यं ध्रुवं रूपं तत्तद् द्रव्येण वै तदा।
यथोक्तेन विधानेन परिवारांश्च कल्पयेत्।।

गरुडस्य च शान्तस्य विघ्नेशानन्तयोरपि।
दुर्गायाश्च सरस्वत्याः शैलबेरं न दोषकृत्।।

अन्यथान्यांस्तु कुर्याच्चेदाभिचारिकमुच्यते।
तद्दोषस्य च शान्त्यर्थं प्रायश्चित्तं सुहूयताम्।।

ब्राह्मं सौरं च सौम्यं तदाग्नेयं गारुडं तथा।
तद्दैवत्यं च जुहुयादङ्गहोमं च हूयते।।

पारमात्मिकमन्त्रैश्च जयादींश्च यथाक्रमम्।
अभ्यातानान्राष्ट्रभृतः श्रीभूसूक्तेन संयुतम्।।

दुर्गासूक्तं च जुहुयादींकारादींस्तथैव च।
ब्राह्मणान् भोजयित्वा तु दक्षिणां च ददेत् पुनः।।

स्थापयेत् कौतुकादींश्च ध्रुवबेरानुरूपकान्।

**क्रि.२२.९२ - ९६**

यद् द्रव्यं मूलबेरं तु तेनैव परिषद्गणान्।।

कारयेद्वीशशान्तार्कदुर्गावाणीविनायकान्।
नैव दोषप्रदाः शैला अन्यथा तु कृता यदि।।

आभिचारिकमित्युक्तं तस्य दोषस्य शान्तये।
ब्राह्मं सौरं तथाग्नेयं शतमष्टोत्तरं यजेत्।।

अङ्गहोमं च जुहुयात् पारमात्मिकसंयुतम्।
जयादींश्चैव श्रीसूक्तं दुर्गासूक्तं ततो यजेत्।।

ईंकारादींस्ततो हुत्वा ब्राह्मणानपि भोजयेत्।
मूलबेरानुरूपांस्तान् कृत्वा च स्थापयेत् पुनः।।

### ९.२.३८ आलयविपर्यासादौ प्रायश्चित्तम्

**क्रि.२०.१३४ - १३७**

विमानं नवधामार्गे यन्मार्गेण प्रकल्पितम्।
कारयेद् ध्रुवबेरं तु तन्मार्गेणाधिकेन वा।।

ततो हीनं न कर्तव्यं कौतुकादित्रयं तथा।
आलयस्य विपर्यासे तथा बेरविपर्यये।।

शूलदारुविपर्यासे कल्पनादिविपर्यये।
ब्राह्मं च विष्णुसूक्तं च गारुडं सौम्यमेव च।।

प्राजापत्यं च रौद्रं च सहस्त्रं जुहुयात् क्रमात्।
पूर्वोक्तेनैव मार्गेण कारयेत् तद्विधानतः।।

**स.६७.१ - ३**

**खि.३४.२९, ३०**

आलयानां विपर्यासे तथा शूलविपर्यये।
ब्राह्मणान् भोजयित्वा तु शक्तितो दक्षिणां ददेत्।।

बेराणां च विपर्यासे तथा शूलविपर्यये।
ब्राह्मं च वैष्णवं हुत्वा यथार्हं परिकल्पयेत्।।

***

# ३. प्रतिष्ठादोषप्रायश्चित्तम्

## ९.३.१ प्रतिष्ठायां यागशालाप्रमाणन्यूनतादौ प्रायश्चित्तम्

**स.६९.२६ - २९**

लघुदोषे पृथक् तस्य प्रायश्चित्तं प्रवक्ष्यते।
प्रमाणे यागशालायाः प्रोक्ते न्यूने विपर्यये।।

शय्यावेद्यास्तथा चैव ह्यलङ्कारविवर्जने।
अन्यदेव कृतं चापि माने न्यूनेऽधिके तथा।।

जुहुयाद् भूमिदैवत्यं होमं देशाधिपस्य च।
वैष्णवं विष्णुसूक्तं च पुरुषसूक्तसमन्वितम्।।

हुत्वा पश्चात् प्रकुर्वीत पश्चादन्नाद्यमेव च।

**क्रि.२२.२१ - २३**

**वि.६५.४०२**

यज्ञशालायां महावेद्यां च प्रमाणहीनायामधिकायां च अन्यदेशे कृतायाम् अलङ्कारहीनायां तत्तद्देशाधिपदैवत्यं, वैष्णवं, विष्णुसूक्तं, श्रीभूमिदैवत्यं च जुहुयात्।

**प्र.२७.१५, १६**

**वा.४६**

उक्तस्य यागशालायां हीनाधिक्ये विशेषतः।।

तथैव शयनस्थानमलङ्कारविवर्जितम्।

तद्देशान्यकृते चैव न्यूनाधिक्ये विशेषतः (तथैव च)।।

वैष्णवं विष्णुसूक्तं च भूसूक्तं च यजेत् क्रमात्।
उक्तवत् कल्पयेद्विद्वान् विपरीतं न कारयेत्।।

य.४५. ८ - १०

यज्ञालये च वेद्यादावन्यदेशेऽधिके सति[1]।
प्रमाणहीने कुम्भे च स्फुटितादियुतेऽपि च।।

धान्ये वस्त्रे च रत्नादौ हीने चेन्न रमेद्धरिः।
तस्माद्यथोक्तं सङ्कल्प्य नरसूक्तं सवैष्णवम्।।

श्रीभूसूक्तं महाशान्तिमन्त्रं हुत्वा तथाऽऽचरेत्।

1. पाठान्तरम् -
वैष्णवं भूमिदैवत्यं विष्णुसूक्तं यजेत् ततः।
यथाविधि तथा कृत्वा सम्भारानप्यसङ्कुलान्।।
सम्भृत्य विधिना धीमान् तत्तन्मन्त्रान् प्रकल्प्य च।
तस्मात् तद्दक्षिणाग्नौ तु 'जातवेदे'ति मन्त्रतः।।
पश्चादाहवनीये तु पश्चिमे सामवेदतः।
'अयं ते' आवसथ्ये तत्पश्चिमे स्यात् क्रमात् सुधीः।।
तत्पश्चिमाग्नौ सभ्ये तु 'मयि गृह्णामि' मन्त्रतः।
'घृतप्रतीक' इत्युक्त्वा अब्जाग्नौ पश्चिमात् ततः।।
अङ्गं न्यस्य तथाऽऽघारं हुत्वाऽन्ते वैष्णवं यजेत्।
विपरीतं यदि स्यात्तत् क्रुद्धो भूयान्नवालये।।
आग्नेयं वैष्णवं हुत्वा तत्तदग्न्यधिदैवतम्।

### ९.३.२ यागशालातोरणेषु प्रमाणहानौ प्रायश्चित्तम्

**वि.६५.४०४**

तोरणेषु प्रमाणहीनेषु पृथक् पृथक् द्वाराधिपदैवत्यं विंशतिकृत्वो जुहुयात्।

**स.६९.६८, ६९ ; क्रि.२२.६०, ६१ ; प्र.२७.४४, ४५**

### ९.३.३ यागशालादर्भमालालोपे प्रायश्चित्तम्

**वि.६५.४०४**

दर्भमालायां हीनायामार्षं, वैष्णवं च यजेत्।

**स.६९.६९ ; क्रि.२२.६१ ; प्र.२७.४५**

### ९.३.४ अग्निकुण्डार्थम् अशुभदेशान्मृदाहरणे प्रायश्चित्तम्

**स.६९.९४ - ९६**

नद्यां वाप्यां तथा कुल्ये तटाके वा शुचिस्थले।।

अग्निकुण्डं समुद्दिश्य मृदं वा सिकतास्तु वा।
शुद्धामेवाहरेत् तेषां तीरे शुद्धानथाहरेत्।।

तदन्यत्र गृहीतायां वारुणं वैष्णवं यजेत्।

**क्रि.२२.७८, ७९**

**वि.६५.४०६**

अग्निकुण्डार्थं मृदो वालुकं वाऽऽशुभदेशात् समाहृतं चेत् वैष्णवं वारुणं जुहुयात्।

**प्र.२७.६१**

### ९.३.५ प्रतिष्ठायाम् अग्निकुण्डद्रव्यदोषे प्रायश्चित्तम्

**स.६९.३०, ३१**

शिलया दारुलोहैर्वा लोष्टैर्वाऽथेष्टकादिभिः।।

कुर्याच्चेदग्निकुण्डं तु वैष्णवं भौतिकं यजेत्।

जुहुयात् सावित्र्या तत्र यावच्छक्त्या यथाक्रमम्।।

**क्रि.२२.२४, २५**

शिलालोष्टेष्टकावृक्षैरग्निकुण्डे कृते सति।।

वैष्णवं भौतिकं हुत्वा सावित्र्याऽष्टशतं यजेत्।

### ९.३.६ प्रतिष्ठायाम् अग्निकुण्डमानदोषे प्रायश्चित्तम्

**स.६९.३२**

हीनाधिकेन मानेन कृतं चेदग्निकुण्डकम्।

ब्राह्मं सौम्यं तथाग्नेयमादित्यं जुहुयात् क्रमात्।।

**ज्ञा.१०० - १९१ ; क्रि.२२.२५, २६ ; खि.३४.४६ ; नि.३२**

**वि.६५.४०२**

अग्निकुण्डानि हीनाधिकप्रमाणेन कृतानि चेत्, ब्राह्मं सौम्यमाग्नेयं च जुहुयात्।

**प्र.२७.१८, १९**

**वा.४६**

कुण्डे प्रमाणहीने च शल्यलोष्टादिसंयुते।।

वैष्णवं भौतिकं हुत्वा पुनः कर्म समारभेत्।

### ९.३.७ प्रतिष्ठाहोमस्थानविपर्यासे प्रायश्चित्तम्

**नि.३२**

ऐन्द्रस्थानेऽन्यदिक्स्थाने हुतं यदि -------।।

तन्मन्त्रं वैष्णवं हुत्वा भोजयेद्दश विप्रकान्।
गर्भालयेऽन्यस्थाने वा प्राजापत्यं सवैष्णवम्।।

आग्नेयं वारुणं चैव व्याहृत्यन्तं सुहूयताम्।

**खि.३४.४२**

जुहुयात् भूमिदैवत्यं होमस्थानविपर्यये।।

### ९.३.८ सभ्याग्निस्थापनलोपे प्रायश्चित्तम्

**वि.६५.४०८**

नित्याग्निकुण्डे सभ्याग्निस्थापने हीने पूर्ववत् प्रायश्चित्तं हुत्वा, श्रोत्रियागार-तोऽग्निमाहृत्य, निधायाघारं हुत्वा नित्यहोमं समाचरेत्।

**प्र.२७.९८, ९९**

**य.४५.२५ - २७**

नित्याग्निस्थापने हीने सभ्याग्नौ च विशेषतः।।
प्रायश्चित्तं महाशान्तिं कृत्वा मथितमाहरेत्।
आघारान्ते तथा शान्तिं वैष्णवं व्याहृतिं तथा।।

हुत्वान्ते च सुसंरक्ष्य नित्यहोमं समाचरेत्।

### ९.३.९ वास्तुहोमे विहितदेशकालव्यतिक्रमे प्रायश्चित्तम्

**ज्ञा.१००.१९०**

गर्भालये विमाने वा विलीने निम्ने वा अकाले चुल्ल्यां वास्तुहोमं यदि कुर्यात् आग्नेयं वारुणं वैष्णवं प्राजापत्यं व्याहृत्यन्तं हुत्वा पुनः सम्यगाचरेत्।

## ९.३.१० वास्त्वग्निसंस्थापने उक्तदिग्व्यतिक्रमे प्रायश्चित्तम्

**ज्ञा.१००.१९०**

ऐन्द्रे वास्त्वग्निसंस्थापनं कुर्याच्चेत् ऐन्द्रं वैष्णवं हुत्वा विप्रशतं भोजयेत्। एवमेवान्यदिक्स्थापने तत्तद्दिग्दैवत्यं वैष्णवयुतं हुत्वा भोजनमारभेत।

## ९.३.११ यागशालायां श्वकाकाद्युपहतिप्रायश्चित्तम्

**ज्ञा.१००.१९०**

श्वकाकाद्युपहतौ प्रवेशे च अग्निशालायां तद्द्रव्यार्हकं शौचं कृत्वा वास्तुहोमान्ते वैष्णवं हुत्वा शक्तितो दक्षिणां दत्वा पुण्याहान्ते समारभेत्।

## ९.३.१२ अङ्कुरार्पणे ब्रह्माद्यर्चनलोपे प्रायश्चित्तम्

**वि.६५.४०१**

अङ्कुरार्पणकाले ब्रह्मसोमादिदेवानामर्चने हविर्निवेदने च हीने तत्तद्दैवत्यं, वैष्णवं च हुत्वा, पुनरभ्यर्च्य हविर्निवेदयेत्।

**प्र.२७.३, ४**

## ९.३.१३ प्रतिष्ठायाम् अङ्कुरार्पणलोपे प्रायश्चित्तम्

**वि.६५. ४०१**

अङ्कुरार्पणहीने वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, ब्राह्मं, सौम्यं, व्याहृतीश्च हुत्वा, पुनरप्यङ्कुरार्पणं कुर्यात्।

**प्र.२७.४, ५**

**य.४५.१ - ३**

अत ऊर्ध्वं प्रवक्ष्यामि प्रतिष्ठानिष्कृतिं बुधाः।

अस्याधानस्य देवस्य शान्त्यर्थं दोषकर्मणाम्।।

अस्य चाग्नेः समूर्तस्य नित्यनैमित्तिकादिषु।
कारयेद्विधिना धीमानङ्कुरार्पणपूर्वकम्।।

अङ्कुरार्पणहीनं चेदन्यद् भवति कर्म च।
तस्माच्छान्तिं च हुत्वैव कुर्यादङ्कुरपूर्वकम्।।

### ९.३.१४ प्रतिष्ठायाम् अङ्कुरार्पणोत्तरकर्मलोपे प्रायश्चित्तम्

**वि.६५.४०१**

अङ्कुरार्पणं कृत्वा, पश्चात् कर्म नाचरेच्चेत् राजराष्ट्रनाशाय भवति। तस्माद्यत्नतः कुर्यात्। तद्दोषशमनाय महाशान्तिं हुत्वा, 'क्षमस्वे' ति देवं प्रणम्य, पुनरप्यङ्कुरार्पणपूर्वं कर्म समाचरेत्।

**प्र.२७.६, ७**

### ९.३.१५ पीठसंघाते रत्नालाभे प्रायश्चित्तम्

**प्र.२७.७ - ९**

अक्ष्युन्मेषात्तु पूर्वं चेत् पीठसङ्घातकर्मणि।।

अलाभे चैव रत्नानां वैष्णवं विष्णुसूक्तकम्।
सूक्तं तु पौरुषं ब्राह्मं सौम्यं चैव तु व्याहृतीः।।

हुत्वा सुवर्णं बहुशः तत्तत्स्थाने विनिक्षिपेत्।

**वि.६५.४०२**

**य.४५.४, २४, २५**

कृत्वैव पीठसंघातपूर्वं चैवाक्षिमोचनम्।

रत्नानामप्यलाभे तु सुवर्णं वा विनिक्षिपेत्।।

-----------------------------------

रत्नन्यासविहीने तु पूजावेद्यां विशेषतः।।

सुवर्णं वा विनिक्षिप्य वैष्णवं चापि हूयते।

**क्रि.२१.१४०, १४१**

रत्नन्यासविहीने तु पीठसङ्घातकर्मणि।
चालयित्वा ततः पीठात् शान्तिहोमावसानके।।
रत्नन्यासं तथा कृत्वा पुनः सङ्घातमाचरेत्।

### ९.३.१६ पीठसंघाते मन्त्रलोपे प्रायश्चित्तम्

**क्रि.२१.१४२**

रत्नन्यासे कृते पीठसङ्घाते मन्त्रवर्जिते।
शान्तिं हुत्वा विधानेन तत्तन्मन्त्रं स्पृशन् जपेत्।।

### ९.३.१७ पीठसंघाते आग्नेयविधानादिना कृते प्रायश्चित्तम्

**क्रि.२१.१४३, १४४**

यद्याग्नेयविधानेन केवलं शिल्पिनाऽथवा।
कृते तु पीठसङ्घाते संस्नाप्य कलशैस्तथा।।
हुत्वा पश्चान्महाशान्तिं तत्तन्मन्त्रं जपेत्तथा।

### ९.३.१८ ध्रुवबेरस्थापने पीठविरहे प्रायश्चित्तम्

**क्रि.२१.१४४ - १४९**

तथैव मूलबेरे तु स्थापिते केवलस्थले।।

देवं विशेषतोऽभ्यर्च्य क्षमस्वेति प्रणम्य च।
कुम्भे देवं समावाह्य पीठं कृत्वा सलक्षणम्।।

पीठे देवं समारोप्य शान्तिं हुत्वा यथाविधि।
पर्यग्निपञ्चगव्याभ्यां पुण्याहेन च शोधयेत्।।
पञ्चगव्याधिवासादीन् कृत्वा संस्नाप्य पूर्ववत्।
प्रतिष्ठोक्तक्रमेणैव प्रतिष्ठां पुनराचरेत्।।

नवाहं वाथ सप्ताहं पञ्चाहं त्रियहं तु वा।
देवं विशेषतोऽभ्यर्च्य क्षमस्वेति प्रणम्य च।।

ब्राह्मणान् भोजयित्वा तु दद्यादाचार्यदक्षिणाम्।

## ९.३.१९ पीठलक्षणाभावे प्रायश्चित्तम्

**स.६८.९० - ९४**

ध्रुवस्य कौतुकस्यापि यथोक्तं पीठमाचरेत्।।

अधिके व्याधिपीडा स्यात् हीने च मरणं ध्रुवम्।
समं चेद्धनधान्यादि पुत्रपौत्रविवर्धनम्।।

अन्यथा स्थापितं चेत्तु प्रायश्चित्तं यजेत् पुनः।
तद्दैवत्यं च जुहुयात् सहस्रं चाष्टसंयुतम्।।

तदालयगतानां च सर्वेषां चैव हूयते।
ब्राह्मणान् भोजयित्वा तु दक्षिणां च ददेत् पुनः।।

सलक्षणं तथा पीठं कारयेत विचक्षणः।

**क्रि.२१.१३८ - १४०**

**९.३.२० लोहबिम्बस्य पीठभङ्गे प्रायश्चित्तम्**

**खि.३४.७७ - ८०**

पीठं लोहजबिम्बस्य प्रमादाद्यदि भज्यते।
बालालयविधानेन कार्यं कृत्वा विचक्षणः।।

पूर्वन्यस्तानि रत्नानि यत्नात् संरक्ष्य निक्षिपेत्।
सप्तभिः कलशैर्देवं स्नापयित्वा विधानतः।।

लोकपालकमन्त्रैश्च महाशान्तिपुरःसरम्।
पुनः प्रतिष्ठामार्गेण रत्नन्यासं विधाय च।।

पीठं संयोज्य देवेशं प्रतिष्ठाप्य समर्चयेत्।
प्रभूतं च निवेद्यैव ब्राह्मणान् भोजयेत् क्रमात्।।

**९.३.२१ प्रतिष्ठायाम् अक्षिमोचनलोपे कालातिक्रमे च प्रायश्चित्तम्**

**स.६७.३८, ३९, ४४,४५**

तथाक्षिमोचने हीने कालातीते प्रमादतः।
भूतादीनां च दैवत्यं यद्देवादि च हूयते।।

ईंकारादींस्ततो हुत्वा पारमात्मिकसंयुतान्।
पूर्वोक्तेन क्रमेणैव प्रायश्चित्तं यजेद् बुधः।।

---

अक्षिमोचनहीने च अष्टाशीतिं समाहुनेत्।
पूर्वोक्तेन क्रमेणैव प्रायश्चित्तं यजेद् बुधः।।

पूर्ववद्विधिना सम्यगक्षिमोचनमाचरेत्।

**क्रि.२०.१७७, १७८**

अक्षिमोचनहीने च कालातीते प्रमादतः।
षण्मण्डलाधिदैवत्यं यद्देवादि ततः परम्।।
ईंकारादींस्ततो हुत्वा पारमात्मिकमेव च।
अष्टाशीतिं ततो हुत्वा कारयेदक्षिमोचनम्।।

**नि.३२**

अक्षिमोचनकाले च व्यतीते तु विचक्षणः।
षण्मण्डलाधिपं शान्तं हुनेदेकाक्षरादिकम्।।

जुहुयात् पौरुषं सूक्तं कारयेदक्षिमोचनम्।

**ज्ञा.९८.१८८**

अक्षिमोचनकाले अतिक्रान्ते षण्मण्डलाधिपमन्त्रान् शान्तिं हुत्वा पश्चादक्षिमोचनं कुर्यात्।

### ९.३.२२ प्रतिष्ठायाम् अक्षिमोचने वर्ज्यकालकृते प्रायश्चित्तम्

**वि.६५.४०२**

अर्कराहुसौराणामुदये अन्ध[1] चैकनक्षत्रे नक्षत्रे अक्षिमोचने कृते च सर्वनाशाय भवति। वैष्णवं, विष्णुसूक्तं, नवग्रहदैवत्यं च हुत्वा, पुनरक्षिमोचनं कारयेत्।

**प्र.२७.११ - १३**

**क्रि.२०.१७९, १८०**

क्रूरग्रहाणामुदये त्वज्ञानात् क्रियते यदि।
क्षालयित्वा ततो हुत्वा प्रायश्चित्तं च पूर्ववत्[2]।।

पूर्ववद्विधिना सम्यग् अक्षिमोचनमाचरेत्।

---

1. अन्धके च (?) 2. अक्षिमोचनकालातिक्रमवत्।

### ९.३.२३ प्रतिष्ठायाम् अक्षिमोचने मन्त्रलोपादौ प्रायश्चित्तम्

**नि.३२**

मन्त्रव्यतिक्रियाहीने (?) तत्काले जुहुयात् ततः।।

महाशान्तिं यथाशक्ति दक्षिणां च ददेत् पुनः।

### ९.३.२४ पीठसंघाताक्षिमोचनयोः क्रमविपर्यासे प्रायश्चित्तम्

**नि.३२. ३५ - ३९**

कौतुकं च ध्रुवार्चां च तत्तत्पीठे विशेषतः।।

रत्नन्यासं च कृत्वैव पीठसंघातमाचरेत्।
पश्चाद्यथाऽक्षिमोक्षं च कारयेत् तच्छुभावहम्।।

अन्यथा चेद्विनश्यन्ति ध्रुवार्चा च विशेषतः।
महाशान्तिं च हुत्वा तु त्रियहं तस्य शान्तये।।

तस्माद्यथोक्तस्थाने तु स्थापयित्वैवमाचरेत्।
अन्यत्र तेषु सर्वेषु ध्रुवार्चायां ध्रुवं तथा।।

स्थापयित्वैव पश्चात् तु अक्षिमोचनमाचरेत्।

### ९.३.२५ प्रतिष्ठायाम् अक्षिमोचनलोपे प्रायश्चित्तम्

**ज्ञा.९९. १८९**

नयनमोक्षक्रियां हित्वा स्थापितं चेत् अब्जाग्नौ त्रिशतं वैष्णवं हुत्वा तदालयगतदेवानां चतुर्भिः मूर्तिमन्त्रैश्च हुत्वा सहस्राहुतिं हुत्वा सहस्रभोजनं कृत्वा स्थापयेत्। संवत्सरेऽतीते लोहमयं भवतीति कश्यपः।

**वि.६५.४०२**

अक्षिमोचने हीने ------------सर्वनाशाय भवति। वैष्णवं, विष्णुसूक्तं, नवग्रहदैवत्यं च हुत्वा, पुनरक्षिमोचनं कारयेत्।

**प्र.२७.११, १३**

### ९.३.२६ प्रतिष्ठायाम् अक्षिमोचनलोपादौ प्रायश्चित्तम्

**स.६९.१२, १३**

अक्षिमोचने हीने च तथा चैवाधिवासने।।

कुर्यात् पुनः प्रतिष्ठां तु पूर्वोक्तेन विधानतः।

**क्रि.२३.६, ७ ; वा.४६**

### ९.३.२७ अक्षिमोचने गवादिदर्शनलोपे द्रव्यलोपे प्रायश्चित्तम्

**वि.६५.४०२**

अक्षिमोचनकाले गवादिदर्शनद्रव्यहीने गोदानसूक्तं, तत्तद्द्रव्याधिदैवत्यं वैष्णवं च हुत्वा पश्चात् तत्तद् द्रव्यं विधिवद्दर्शयेत्।

**प्र.२७.९ - ११**

अक्ष्युन्मेषणकाले तु गवादीनामसम्भवे।।

दर्शनद्रव्यरूपाणां यथालाभं प्रगृह्य च।

तत्तद्रव्याधिदैवत्यं वैष्णवं जुहुयात् क्रमात्।।

तत्तद् द्रव्यं च सम्पाद्य विधिवद्दर्शयेत् पुनः।

**प्र.२७.१७, १८**

### ९.३.२८ अक्षिमोचने क्रियालोपादौ प्रायश्चित्तम्

**य.४५.५**

अक्षिमोचनकाले तु क्रियाहीने विपर्यये।
गवादिद्रव्यहीने तु शान्तिं हुत्वैव चाचरेत्।।

### ९.३.२९ अक्षिमोचने बेरशुद्धिहानौ प्रायश्चित्तम्

**वि. ६५. ४०२**

ध्रुवबेरस्यक्षिमोचनान्ते बेरशुद्धिक्रियायां हीनायां विपरीतायां वा, वैष्णवं विष्णुसूक्तं, पुरुषसूक्तं, रौद्रमार्षं, वारुणं च हुत्वा पुनराचरेत्।

**प्र.२७. १७, १८**

### ९.३.३० अक्षिमोचने मन्त्रलोपादौ प्रायश्चित्तम्

**ज्ञा.९८.१८८**

मन्त्रद्रव्यक्रियाहीने अक्षिमोचनान्ते शान्तिं विधानेन हुत्वा दक्षिणां दद्यात्।

**नि.३१**

मन्त्रहीने विपर्यासे शान्तिहोमं सुहूयताम्।
देवदेवमनुज्ञाप्य दक्षिणां च ददेत् पुनः।।

### ९.३ भूपरीक्षाद्यक्षिमोचनान्तलोपे प्रायश्चित्तम्

**ज्ञा.९८. १८८**

भूपरीक्षाद्यक्षिमोचनान्तं यद्यत्क्रियाविहीनं तस्य शान्तये तद्दिने पौण्डरीकाग्नौ महाशान्तिं हुत्वा आरभेत।

**नि.३२**

## ९.३.३२ अधिवासद्रव्यलोपे प्रायश्चित्तम्

**नि.३२**

अधिवासानि त्रीणि उक्तद्रव्यविहीनके (?)।

द्रव्याधिदेवान् हुत्वा तु विष्णुसूक्तसमायुतम्।।

वैष्णवं जुहुयाद्धीमान् आज्येन चरुणापि वा।

## ९.३.३३ रत्नाद्यलाभे प्रायश्चित्तम्

**प्र.२७.३९ - ४२**

रत्नप्रतिनिधी रुक्मं धातूनां पारदं तथा।।

बीजानां च यवाः प्रोक्ताः पूर्वालाभे परः स्मृतः।

रत्नानां प्रणिधिं गृह्य वैष्णवं विष्णुसूक्तकम्।।

दिग्दैवत्यं वैष्णवं च धातूनामथ तत्परम्।

बीजानां प्रणिधिं गृह्य वायव्यं वैष्णवं तथा।।

हुनेद्विंशतिवारं तु प्रत्येकं दोषशान्तये।

**स.६९.६२ - ६५ ; क्रि.२२.५५ - ५७ ; वि.६५.४०४**

## ९.३.३४ प्रतिष्ठायाम् अधिवासलोपे प्रायश्चित्तम्

**वि.६५.४०२**

पञ्चगव्यक्षीरोदकेष्वधिवासने हीने वैष्णवम्, आर्षं, विष्णुसूक्तं च, हुत्वा, जलाधिवासं त्र्यहमष्टाहं वा कारयेत्।

**प्र.२७.१३, १४**

**य.४५.६, ७**

गव्याधिवासने हीने हीने क्षीराधिवासने।
तत्तद्दैवत्यमन्त्रं च शतशो जुहुयात् पुनः।।

घटमापूर्य तद्द्रव्यैः समभ्यर्च्याभिषिच्य च।
[1]ततस्तं कुम्भमेकाहं द्व्यहो वाऽप्यधिवासयेत्।।

**ज्ञा.९९. १८९**

अनधिवासिते बिम्बे स्थापिते राजराष्ट्रविनाशाय भवति। अज्ञानादर्थलोभाद्वा स्थापितं चेत् महाशान्तिं हुत्वा पश्चादधिवास्य स्थापनं सम्यगाचरेत्।

## ९.३.३५ प्रतिष्ठायाम् अधिवासहोमलोपे प्रायश्चित्तम्

**नि.३२**

अधिवासहोमहीने च रौद्रं ब्राह्मं सवैष्णवम्।।

उक्तहोमांश्च सर्वान् वै क्रमेण जुहुयाद्बुधः।

## ९.३.३६ हौत्रशंसने वैपरीत्यादिप्रायश्चित्तम्

**ज्ञा.१००.१००.१९१**

वैपरीत्येऽथ गोत्रस्य विहीने वा आज्येनार्षं वैष्णवं ब्राह्मं प्राजापत्यमैन्द्रं सारस्वतं चरुणा हुत्वा पुनरारभेत्। हीननिष्कृतिमारभ्यैतदन्तं सार्वत्रिकमिति विज्ञायते।

**नि.३२**

[अत्र आर्षम् इत्यस्य स्थाने रौद्रमिति दृश्यते। 'ऐन्द्रम्' इति तु न दृश्यते।]

---

1. पाठान्तरम् - ततस्त्रियहमेकाहं पञ्चाहमधिवासयेत्।

**प्र.२७.६८**

हीने वा विपरीते वा तत्र हौत्रप्रशंसने।
ब्राह्मं मुनीन्द्रमन्त्रांश्च हुनेत् पारिषदामपि।।

**वि.६५.४०६**

[अत्र 'पारिषदाम्' इति न दृश्यते।]

**य.४५.१५, १६**

हौत्रशंसनकाले तु विपरीतेऽथ सङ्कुले।।
निर्वापे चाहुतीनां च शान्तिं हुत्वा तथा चरेत्।

## ९.३.३७ शेषहोमलोपे प्रायश्चित्तम्

**वि.६५.४०८**

सभ्याग्नौ शेषहोमहीने वैष्णवमाग्नेयं व्याहृतीश्च दशतो जुहुयात्।

**प्र.२७.९७**

## ९.३.३८ अग्निप्रणयनवैपरीत्यादिप्रायश्चित्तम्

**वि.६५. ४०३**

[1]विपरीते, तत्तन्मन्त्रहीने च वैष्णवम्, आग्नेयं ब्राह्मं, सौम्यं च हुत्वा, अग्निं प्रणयेत्। पश्चात् तत्तदग्निषु आघारात् पूर्वतोऽन्तरा नैव गच्छेत्। अज्ञानाद्यदि गच्छेत्, तद्दिक्पालदैवत्यं वैष्णवमाग्नेयं च जुहुयात्।

तण्डुलैरेकजातीयैर्द्विप्रस्थैः चरुं गव्यं नवनीतं च लौकिकाग्नौ पाचयित्वा, पुनस्तत्तदग्निषु समन्त्रकं संस्कुर्यात्।

---

1. अन्वाहार्यादिपञ्चाग्निप्रणयने इत्यध्याह्रियते।

**प्र.२७.२४ - २६**

विपरीते[1] प्रणयने तत्तन्मन्त्रविवर्जिते।।

वैष्णवं पावकं ब्राह्मं सौम्यं हुत्वा पुनश्चरेत्।
तत्तदग्निषु चाघारात् पूर्वं तेषामथान्तरा।।

न गच्छेद्यदि गच्छेत् तु तत्तद्दिक्पालदैवतम्।
वैष्णवं पावकं चेति प्रायश्चित्तं हुनेत् क्रमात्।।

## ९.३.३९ अग्निसंस्कारविपर्यासादिप्रायश्चित्तम्

**खि.३४.५६, ५७**

संस्काराणां विपर्यासे मन्त्राणामपि सङ्करे।।

अग्निं प्रज्वाल्य प्रणमेदग्निसूक्तं समुच्चरेत्।
तेन पूर्णं भवेत् सर्वं यज्ञमूर्तिप्रसादतः।।

## ९.३.४० प्रतिष्ठायां मथिताग्निनाशे प्रायश्चित्तम्

**स.६९.३३, ३४**

पूर्वोक्तेन विधानेन मथित्वा जातवेदसम्।
पुनस्तदग्नेर्नाशे तु मथित्वाग्निं प्रगृह्य च।।

आग्नेयं चरुणा हुत्वा गृह्णीयात्तं हुताशनम्।

**क्रि.२२.२६, २७ ; ज्ञा.१००**

1. अग्नेरिति अध्याह्रियते।

**नि.३२**

स्थापिताग्निविनाशे तु मथित्वा चाग्निमारभेत्।।

अलाभे देशिकावासात् तस्यैवं च ददेत् पुनः।
स्थाप्य हुत्वा तु चाग्नेयं साज्यं चरु समारभेत्।।

**प्र.२७.२७**

[उत्पन्ने मथिताग्नौ तु शान्ते तत्र प्रमादतः।
आदौ प्रणयनादर्वाक्, अथवाग्निषु सर्वशः।।
शान्तिं यथोदितां कुर्यात् अग्निसूक्तं सहस्रशः।]

## ९.३.४१ मथिताग्न्यलाभे प्रायश्चित्तम्

**वि.६५.४०३**

यथोक्ते स्थाने पञ्चाग्नीन् परिकल्प्य, प्रोक्षणोल्लेखने कृते मथिताग्न्यलाभे तु आचार्यागारतः श्रोत्रियागारतो वा अग्निमाहृत्य, गार्हपत्याग्निकुण्डे निधाय आघारं हुत्वा, वैष्णवं, भूमिदैवत्यमाग्नेयं जुहुयात्। तमग्निं वर्धयित्वा, अन्वाहार्ये प्रणीय, पश्चादाहवनीये प्रणीय, पश्चादावसथ्ये प्रणीय, ततः सभ्ये प्रणीय, ततः पञ्चाग्नौ प्रणयनं कुर्यात्।

**प्र.२७.२० - २४**

**ज्ञा.१००**

मथिताग्न्यलाभे आचार्यगृहात् श्रोत्रियगृहाद्वा आहृत्य तस्मै वित्तं दत्त्वा आग्नेयेन चरुणा हुत्वा आरभेत।

**खि.३४.४५**

मथिताग्नावलाभे तु श्रोत्रियागारतो हरेत्।

**वा.४६**

पावके मथिते हीने मथिताग्रेस्तु हीनके।।

चरुणाज्येन संयुक्तमाग्रेयं वैष्णवं यजेत्।

पावकं पुनरादाय कृत्वा सर्वं समाचरेत्।।

### ९.३.४२ प्रतिष्ठाहोमे स्रुगाद्यलाभे प्रायश्चित्तम्

**वि.६५.४०५**

स्रुवा(गा?)दीनामलाभे तत्तद् ध्यात्वा, स्रुवेण हुत्वा वैष्णवं ब्राह्ममाग्रेयं सौम्यमादित्यं च जुहुयात्।

**स.६९.८७, ८८**

स्रुगादीनामलाभे तु जुहुयाद्वै स्रुवेण वा।।

तद्रूपमिति तं ध्यात्वा तत्तन्मन्त्रेण हूयते।

आर्षकं वैष्णवं ब्राह्मं प्रायश्चित्तं यजेत्ततः।।

**क्रि.२२.७५, ७६**

### ९.३.४३ प्रोक्तसमिदलाभे प्रायश्चित्तम्

**स.६९.८९, ९०**

अलाभे समिधां तत्र पालाशीः समिधो हरेत्।

आश्वत्थीर्वा समाहृत्य तां तां हृत्वा सुहूयताम्।।

आग्रेयं वैष्णवं तत्र प्रायश्चित्तं यजेद् बुधः।

**क्रि.२२.७६**

जुहुयादार्षकं मन्त्रं वैष्णवं ब्राह्मसंयुतम्।

पालाशीं वा तथाऽऽश्वत्थीमलाभे समिधं हरेत्।।

**प्र.२७.५७, ५८**

अलाभे समिधां गृह्य पालाशीर्वटसम्भवाः।।

आग्नेयं वैष्णवं ब्राह्मं हुत्वा कार्यं समाचरेत्।

**वि.६५.४०६**

समिधामलाभे पालाशीम् आश्वत्थीं वाऽऽहृत्य तत्तत्समिधं ध्यात्वा, आग्नेयं वैष्णवं ब्राह्मं च जुहुयात्।

## ९.३.४४ दर्भादिदोषे प्रायश्चित्तम्

**स.६९. ९० - ९२**

दर्भान् कुशांश्च समिधो मासातीतान् विवर्जयेत्।।

अज्ञानादर्थलोभाद्वा मोहाद्वा बुद्धिपूर्वकम्।

गृहीत्वा तैः कृतं कर्म तत्सर्वं विफलं भवेत्।।

तद्दोषशमनार्थाय वारुणं वैष्णवं तथा।

ब्राह्मं सौम्यं तथाग्नेयम् आदित्यं जुहुयात् क्रमात्।।

**प्र.२७.५८, ५९ ; वि.६५.४०६**

## ९.३.४५ परिस्तरणादिप्रमाणविरहे प्रायश्चित्तम्

**क्रि.२२.२७ - २९, ३४, ३५**

परिस्तरणकूर्चानां परिधीनां तथैव च।।

आज्यस्थाल्यादिपात्राणां स्रुवादीनां तथैव च।

प्रमाणहीने न्यूने च होमे होमे प्रति प्रति।।

मिन्दाहुती च सावित्रीं व्याहृतीर्जुहुयात् क्रमात्।

-----------------------------------

रत्निमात्रायतौ कूर्चौ न्यसेद्दक्षिणवामयोः।
तत्रावाह्य समभ्यर्च्य ब्रह्मसोमौ प्रकल्पयेत्।।

तत्क्रियान्ते तथोद्वास्य दद्याद् ब्राह्मणभोजनम्।

**स.६९.३४ - ३६ ; प्र.२७.१९, २० ; वि.६५.४०२**

## १.३.४६ परिस्तरणदर्भदाहादौ प्रायश्चित्तम्

**स.६९.४५ - ४७**

परिस्तरणदर्भाणां परिधीनां तथैव च।
ऊर्ध्वाग्र[1] समिधौ तद्वदग्निना रहितेऽपि च।।

नाशे भेदे तथा छिन्ने पुनस्तद्वत् प्रयुज्य च।
महाव्याहृतिभिर्हुत्वा मिन्दाहुत्या च हूयते।।

आग्नेयं वैष्णवं चापि व्याहृत्यन्तं यजेद् बुधः।

**क्रि.२२.४३ - ४५**

**वि.६५.४०३**

परिस्तरणादिसम्भाराणां दाहे भेदे नाशे च पुनस्तत्तत् संयोज्य महाव्याहृतीराग्नेयं मिन्दाहुतीर्वैष्णवं च जुहुयात्।

**प्र.२७.३२, ३३**

**वा.४६**

ऊर्ध्वाग्रसमिधौ तद्वत् वर्षिष्ठं च तथैव च।।

दग्धे च पतिते नष्टे महाव्याहृतिभिर्यजेत्।
आग्नेयं वैष्णवं चापि व्याहृत्यन्तं यजेद्बुधः।।

---

1. ऊर्ध्वाग्रसमिधोस्तद्वदग्निना दूषणेऽपि च। (?)

**खि.३४.४९, ५०**

दर्भादिदाहे चाज्ञानात् प्रमादाद् व्याहृतीर्यजेत्।
ऊर्ध्ववर्षिष्ठसमिधौ यदि दग्धौ प्रमादतः।।

महाव्याहृतिभिर्हुत्वा व्याहृतीभिश्च होमयेत्।

### ९.३.४७ प्रतिष्ठाहोमे दर्भपरिध्यादिलोपे प्रायश्चित्तम्

**स.६९.४४**

दर्भाणां परिधीनां च हीने पुष्पे तथैव च।
समिद्धीनेऽक्षतैर्हीने वैष्णवं व्याहृतीर्यजेत्।।

**क्रि.२२.४२, ४३**

**वा.४६**

अग्नौ जले च पतिते कुण्डे गर्ते तु हीनके।
दर्भपरिधिपुष्पैश्च समिदक्षतहीनके।।

प्रणष्टे चलिते चैव वैष्णवं व्याहृतीर्यजेत्।

**खि.३४.४८**

पुष्पाक्षतसमिद्दर्भसम्भारविधुरे तदा।
आग्नेयं तत्र जुहुयात् पञ्चकृत्वस्तु वैष्णवम्।।

### ९.३.४८ इन्धनदोषे प्रायश्चित्तम्

**वि.६५.४०६**

इन्धनमार्द्रं सधूमं जन्तुकण्टकलेपयुक्तम् अग्नौ प्रक्षिपेच्चेत्, तत्त्यक्त्वा अन्यत् प्रक्षिप्य आग्नेयं वैष्णवं व्याहृतीश्च जुहुयात्।

**स.६९.९६ - ९८ ; क्रि.२२.८०, ८१ ; प्र.२७.६२, ६३**

**९.३.४९ इध्मप्रक्षेपणेनाग्निप्रच्यावे प्रायश्चित्तम्**

**खि.३४.५३**

इध्मप्रक्षेपणे काले प्रच्यावो यां दिशं प्रति।
यद्देवाद्यैस्तद्दिगीशमन्त्रैश्च जुहुयाद् बुधः।।

**९.३.५० प्रतिष्ठाहोमे उक्तद्रव्यलोपे प्रायश्चित्तम्**

**वि.६५.४०४**

उक्तद्रव्यस्य हीनं चेत् कापिलेन घृतेन वैष्णवं विंशतिकृत्वो यजेत्। प्रायश्चित्ताग्निकुण्डे अनुक्ते नित्याग्निकुण्डे चुल्यां वा जुहुयात्।

**स.६९.५५, ५६ ; क्रि.२२.४९**

**नि.३२.७८, ७९**

होमद्रव्यविहीने च पूर्णाहुत्या च संयुतम्।
वैष्णवं व्याहृतीश्चैव आज्येनैव जुहोति वै।।

तेनैव च - संपूर्णमेतदित्याह काश्यपः।

**ज्ञा.१००.१९१**

होमद्रव्यविहीने पूर्णाहुतिं व्याहृतिं त्रिराज्येन जुहुयात्। तेन सर्वं पूर्णं भवति।

**९.३.५१ उक्तद्रव्यादिलोपे प्रायश्चित्तम्**

**वा.४६**

उक्तेषुद्रव्यहीनेषु हीना चेदाहुतिक्रिया।।

क्रियामन्त्रविपर्यासे कुम्भपूजादिहीनके।
तथैव ध्यानहीने च स्नापनस्य विहीनके।।

अण्डजादिविहीने च शयने च तथैव च।

हौत्रस्य शंसने हीने मूर्तेरावाहने तथा।।

विपर्यासेऽत्र होमे च रत्नन्यासविहीनके।
तथैव विभ्रमे चैव बुद्धेराचार्यविभ्रमे।।

तस्मिन् काले महोत्पाते दुर्निमित्तस्य दर्शने।
एतैर्दोषैर्युते तत्र प्रतिष्ठां पुनराचरेत्।।

### ९.३.५२ निषिद्धदधिक्षीरग्रहणे प्रायश्चित्तम्

**वि.६५. ४०६**

आजं माहिषं दधि क्षीरं च गृहीतं चेत् वैष्णवं ब्राह्ममाग्नेयं सौरं च व्याहृत्यन्तं पृथक् पृथक् यजेत्।

**स.६९.९३, ९४ ; क्रि.२२.७७, ७८ ; प्र.२७.६०**

### ९.३.५३ निषिद्धाज्यहोमे प्रायश्चित्तम्

**स.६९.५१ - ५५**

सर्वेषामेव होमानां कापिलं घृतमाहरेत्।।

अलाभेऽन्यगवां वाथ घृतं यत्नात् समाहरेत्।
तैलादिस्नेहमिश्रेण जलमिश्रघृतेन वा।।

आज्येन माहिषेणाथ जुहुयाच्चेत् प्रमादतः।
सर्वाग्निषु हुतं सर्वं गृह्णीयुरसुरादयः।।

तद्दोषशमनार्थाय कापिलेन घृतेन वै।
तत्तन्मन्त्रं सुहोतव्यं सद्द्रव्यं चार्षसंयुतम्।।

उक्तमन्त्रेण हुत्वाऽन्ते व्याहृत्या जुहुयाद् बुधः।

**क्रि.२२.४७, ४८**

आज्येन माहिषेणाथ तैलमिश्रघृतेन वा।
जुहुयाच्चेत् प्रमादेन भवेत् तद्धुतमासुरम्।।

अष्टोत्तरसह स्रं च पद्महोमं जुहोति च।
व्याहृतीर्जुहुयादन्ते तस्य दोषस्य शान्तये।।

### १.३.५४ आज्यस्थाल्यादौ मक्षिकादिपतने प्रायश्चित्तम्

**वि.६५.४०३**

आज्यस्थाल्यां चरौ वा मक्षिकाकृमिरोमपिपीलिकादीनां पतिते तद् व्यपोह्य, अन्यद् द्रव्यमादाय, प्राजापत्यमाग्नेयं वैष्णवं च जुहुयात्। आज्यालाभे तं दोषं व्यपोह्य दर्भैरुत्पूय उद्दीप्याहरेत्।

**स.६९.३६ - ३९ ; क्रि.२२.३५ - ३८ ; प्र.२७.२८ - ३०**

**वा.४६**

परिस्तरणकूर्चं च प्रणिधीराज्यपात्रयोः।
स्रुवाविनादीनां ? चैव आज्यदोषे तथैव च।।

रोमजन्तुसमायुक्तं चरावाज्ये विशेषतः।
पिपीलिकादिपतिते प्रायश्चित्तं यजेत् क्रमात्।।

प्राजापत्यं तथाग्नेयं वैष्णवं च यजेद्बुधः।
पूर्वोक्तेनैव मार्गेण पृथक् कृत्वा समन्त्रकम्।।

**य.४५.२४४ [अधिकपाठः]**

आज्यस्थाल्यां चरौ वापि कृमिकीटादिसंभवे।
तद् व्यपोह्यान्यमादाय प्राजापत्यं हुनेत् क्रमात्।।

**९.३.५५ होमद्रव्यस्य अन्यत्र पतने प्रायश्चित्तम्**

**स.६१.४३**

जले तदंशे पतिते तथाऽऽज्ये पतिते जले।

आग्नेयं वैष्णवं चापि व्याहृत्यन्तं यजेद् बुधः।।

**क्रि.२२.४१, ४२**

**९.३.५६ चरुविपर्यासादिप्रायश्चत्तिम्**

**ज्ञा.१००.१९१**

चरूणां विपर्यासे अतीते च शान्तिं हुत्वा ब्राह्मणान् भोजयेत्।

**नि.३२**

चरुपुरोडाशानां च विपर्यासे तथैव च।।

शान्तिहोमं च हुत्वा तु कुर्याद् ब्राह्मणभोजनम्।

**९.३.५७ आहुतिविपर्यासे प्रायश्चित्तम्**

**खि.३४.५८ - ६०**

आहुतीनां विपर्यासे प्रमादाद्यत्र कुत्र वा।

स्विष्टाकारं हुनेत् पश्चात् व्याहृतीनां चतुष्टयम्।।

यत्र यत्र प्रमादः स्याज्जुहुयाद् व्याहृतीः सदा।

न व्याहृतिसमो मन्त्रः होम्यमाज्यसमं च न।।

न गायत्र्या समं जप्यं न दैवं केशवात् परम्।

**नि.३२.**

आहुतीनां विपर्यासे स्विष्टाकारं यजेद्गुरुः।।

**ज्ञा.१००.१९१**

आहुतीनां विपर्यासे ब्राह्मं वैष्णवं हुत्वा यजेत्।

### ९.३.५८ होम्यद्रव्यप्रमाणविरहे प्रायश्चित्तम्

**प्र.२७.३५**

द्रव्ये प्रमाणहीने तु कापिलेन घृतेन वै।
वैष्णवं विंशतिर्हुत्वा पश्चात् कार्यं समाचरेत्।।

### ९.३.५९ आघारिताग्न्यनुगतिप्रायश्चित्तम्

**वि.६५.४०३**

आघारे कृते तस्मिन्नग्नावनुगते 'अयं ते योनि'रिति तद्भस्मनि समिधमारोप्य 'उद्बुध्यस्वे'ति लौकिकाग्नौ निधाय, इन्धनानि निक्षिप्य, उज्ज्वाल्य, परिषिच्य, विच्छिन्नं मिन्दाहुतीः वैष्णवं व्याहृतीश्च यजेत्।

**स.६९.४० - ४२ ; प्र.२७.३० - ३२ ; वा.४६**

**क्रि.२२.३९ - ४१**

विच्छिन्ने तु प्रणीताग्ना 'वयं ते योनि'रित्यृचा।
समिध्यारोप्य तद्भस्म लौकिकाग्नौ निधाय ताम्।।

आधाय परिषिच्याग्निं विच्छिन्नं जुहुयात् पुनः।
मिन्दाहुती वैष्णवं च व्याहृतीर्जुहुयात् क्रमात्।।

एवमग्निं सुसंसाध्य शेषं च जुहुयात् तथा।

**य.४५.पृ.२४४ [अधिकपाठे]**

अनुगतेऽग्नौ ततः पश्चाद् गुरुरग्निं प्रणम्य च।

'अयं ते योनि'रित्युक्त्वा आत्मन्यारोपणं तथा।।

लौकिकाग्निं समादाय प्रज्वाल्य हृदयात्तथा।
अवरोप्यैव तन्मन्त्रात् विच्छिन्नं वैष्णवं यजेत्।।

अत्राप्यनुक्तं यत् सर्वं विमृष्टं तन्मया खिले।
तथा चरेद् गुरुर्धीमान् प्रायश्चित्तं हुनेत् क्रमात्।।

**९.३.६० प्रतिष्ठाहोमस्य श्वकुक्कुटादिस्पर्शे प्रायश्चित्तम्**

**स.६९.८४ - ८७**

श्वानकुक्कुटकाकाद्यैर्होमे स्पृष्टे तथैव च।।

अस्पृश्यैरपि संस्पृष्टे शोधयित्वा व्यपोह्य च।
कुण्डं सलक्षणं कृत्वा चाघारं जुहुयात् क्रमात्।।

आग्नेयं शतशो हुत्वा वैष्णवं शतशो यजेत्।
मूलहोमं शतं हुत्वा जुहुयात् पञ्चवारुणम्।।

निष्कमेकं च दत्त्वैव विप्रानपि च भोजयेत्।

**क्रि.२२.७२ - ७४**

श्वकुक्कुटश्रृगालैश्च होमे स्पृष्टे च वायसैः।।

अस्पृश्यैरपि तत्कुण्डं शोधयित्वा व्यपोह्य च।
कुण्डं सलक्षणं कृत्वा चाघारं जुहुयात् क्रमात्।।

आग्नेयं वैष्णवं मूलहोमं वै पञ्चवारुणम्।
पृथक् पृथक् शतं हुत्वा दत्त्वा गां पूजयेद् द्विजान्।।

**वि.६५.४०५**

श्वकुक्कुटाद्यैः स्पृष्टे होमे तत्कुण्डं व्यपोह्य, पूर्ववत् कुण्डं कृत्वा, आघारं हुत्वा, आग्नेयं, वैष्णवं पञ्चवारुणं मूलहोमं च शतशो जुहुयात्। वैष्णवान् सम्पूज्य ब्राह्मणभोजनं च कुर्यात्।

**प्र.२७.५५ - ५७**

**वा.४६**

अस्पृश्यस्पर्शने कुण्डे पूर्ववज्जुहुयात् क्रमात्।।

पुनः कुण्डादीनाहृत्य पूर्ववत् सर्वमाचरेत्।

## ९.३.६१ होमद्रव्ये अस्पृश्यस्पर्शे प्रायश्चित्तम्

**य.४५.१२**

होमद्रव्ये तु संस्पृष्टे[1] बिम्बे तु स्नपनं चरेत्।
सप्तभिः कलशैः पश्चात् स्नापयेत् कौतुकादिकान्।।

## ९.३.६२ अग्निकुण्डे अशुचिद्रव्यस्पर्शे प्रायश्चित्तम्

**खि.३४.४७**

तुषपाषाणलोष्टादिसंस्पृष्टे त्वग्निकुण्डके।
वैष्णवं चैव जुहुयात् पाञ्चभौतिकमेव च।।

## ९.३.६३ प्रतिष्ठाहोमे अग्नेः पार्श्वज्वलने प्रायश्चित्तम्

**स.६९.४७, ४८**

पार्श्वेऽग्नौ ज्वलिते तस्मिन् समिदाज्ये चरौ हुते।।

---

1. अस्पृश्यैरित्यनुवर्तते।

तत्तद्दिग्देवताहोमं जुहुयादुपलक्ष्य च।
वायव्यं वैष्णवं हुत्वा पुनस्तेन च हूयते।।

**क्रि.२२.४५, ४६**

## ९.३.६४ अग्नेः वामावर्तादौ प्रायश्चित्तम्

**ज्ञा.१००.१९१**

वामावर्ते केशे धूमे गन्धेऽपि विस्फुलिङ्गे कान्त्यां न्यूनायाम् अतीव विज्वलिते ज्वालावलीढके ब्राह्मं वैष्णवं व्याहृत्यन्तं हुत्वा ब्राह्मणान् भोजयेत्।

**खि.३४.५१**

वामावर्ते ज्वलत्यग्नौ सौरमन्त्रैस्तु होमयेत्।

**नि.३२**

वामावर्तकृतानां (?) तु गन्धपुष्पादिकेऽपि च ।
ब्राह्मं वैष्णवसंयुक्तं सौरं हुत्वा विचक्षणः।।
ब्राह्मणान् भोजयित्वा तु शक्तितो दक्षिणां ददेत्।

## ९.३.६५ समित्प्रक्षेपणात् परम् अग्निसङ्कुलप्रायश्चित्तम्

**खि.३४.५२**

समित्प्रक्षेपणे जाते सङ्कुले चेत् प्रमादतः।
वायव्यं जुहुयात् तत्र वैष्णवेन समायुतम्।।

## ९.३.६६ यज्ञकर्मणि अनुक्तप्रायश्चित्ते सर्वत्र प्रायश्चित्तम्

**स.६९.५८ - ६२**

यज्ञकर्मणि सर्वत्र न्यूने हीने विपर्यये।

प्रायश्चित्तं विशेषेण यस्य नोक्तं तु तत्र वै।।

वैष्णवं विष्णुसूक्तं तत् पौरुषं सूक्तमेव च।
शंनो मित्रेति शान्तिं च जप्त्वा सूक्तं च पौरुषम्।।

वैष्णवं विष्णुसूक्तं च जपेद् ध्यायन् हरिं परम्।
वैष्णवेनैव होमेन वैष्णवेन जपेन च।।

सर्वयज्ञेषु यन्न्यूनं सर्वं पूर्णं भवेत्ततः।
यन्मूर्तिमेवं यज्ञस्य विष्णुरित्याह च श्रुतिः।।

अविज्ञाते चान्यदोषे प्रायश्चित्तमिदं स्मृतम्।

**क्रि.२२.५१ - ५५**

**वि.६५.४०४**

प्रायश्चित्तविशेषेऽनुक्ते वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं च जुहुयात्।।

**प्र.२७.३८, ३९**

## ९.३.६७ होमे अनुक्तमुखे कार्याचरणे प्रायश्चित्तम्

**खि.३४.५०, ५१**

अनुक्तमुख अध्वर्युर्यदि कार्याणि चाचरेत्।।

जुहुयादार्षमन्त्रैस्तु सप्तव्याहृतिभिस्तथा।

## ९.३.६८ सर्वहोमविध्यतिक्रमे दोषप्रायश्चित्तम्

**वि.६५.४०७**

सर्वेषां होमानामुक्ते विपरीते हीने च पद्माग्नौ वैष्णवं विष्णुसूक्तं पुरुषसूक्तं च

हुत्वा यथोक्तं च जुहुयात्।

**प्र.२७.७०**

**स.६९.५६, ५७**

क्रियाहीने विपर्यासे होमे मन्त्रस्य सङ्करे।।

अग्निं विष्णुं प्रणम्यैव वैष्णवं व्याहृतीर्यजेत्।
सर्वहोमसमाप्तौ तु सूक्तं वैश्वानरं जपेत्।।

**क्रि.२२.५०, ५१**

**प्र.२७.३६, ३७**

क्रियाहीने विपर्यासे मन्त्राणां सङ्करेऽपि वा।।

वैष्णवं व्याहृतीश्चैव व्याहृत्यन्तं हुनेत् क्रमात्।

**वि.६५.४०४**

**ज्ञा.१००.१९१**

क्रियामन्त्रविपर्यासे वैष्णवमाग्नेयं व्याहृत्यन्तं हुत्वा 'अहमिन्द्र' इत्यग्निं प्रणमेत्।

**नि.३२**

## ९.३.६९ यज्ञोपस्कारमन्त्रविपर्ययादिप्रायश्चित्तम्

**स.६९.२९, ३०**

यज्ञोपस्कारमन्त्राणां द्रव्याणां च विपर्यये।।

आग्नेयं ब्रह्मसूक्तं च जुहुयात् दक्षिणां ददेत्।

**क्रि.२२.२३, २४ ; खि.३४.४३**

**य.४५.१३**

विपर्यासे च हीने च तथा शान्तिं समाचरेत्।।

**ज्ञा.१००.१९१**

यज्ञोपस्कारवस्तूनां विपर्यासे ब्राह्मं वैष्णवं हुत्वा दक्षिणां दद्यात्।

**नि.३२**

**वा.४६**

यज्ञोपकरणे हीने द्रव्याणां च विपर्यये।
ब्राह्ममाग्नेयसंयुक्तं यजेदुक्तवदाचरेत्।।

## ९.३.७० अन्तहोमे क्रियालोपादौ प्रायश्चित्तम्

**ज्ञा.१००.१९१**

अन्तहोमक्रियाहीने सङ्कुले वा पूर्ववद्धुत्वा (पूर्णाहुतिं व्याहृतिं त्रिराज्येन) सूक्तं वैश्वानरं जपेत्, सर्वकर्मसमृद्धिर्भवति।

**नि.३२**

[अत्र ब्राह्मणभोजनमपि विधीयते।]

**खि.३४.६०, ६१**

अन्तहोमे क्रियाहीने क्रियाद्रव्यादिसङ्कुले।।
पूर्णाहुतिं हुनेद् भक्त्या सर्वशान्तिर्भविष्यति।

## ९.३.७१ होमे प्रयोगदोषे प्रायश्चित्तम्

**खि.३४.५४**

यं यं देवं समुद्दिश्य प्रयोगो यत्र वर्तते।
दोषे तद्दैवत्यमन्त्रैः प्रायश्चित्तं प्रकल्पयेत्।।

## ९.३.७२ उक्तयागस्थानहानादौ प्रायश्चित्तम्

**खि.३४.४२**

उक्तयागस्थानहीने स्थानानामपि सङ्करे।
जुहुयाद्भूमिदैवत्यं----------------------।।

### ९.३.७३ प्रतिष्ठायां रात्रौ कुम्भस्थापने प्रायश्चित्तम्

**नि.३२**

स्थापितं यदि रात्रौ तु महादोषो भविष्यति।
तस्मात् सौरं तथाऽऽग्नेयं वैष्णवं च पृथक् पृथक्।।

अष्टसाहस्रकं हुत्वा दिवैव स्थापयेत् पुनः।

### ९.३.७४ प्रतिष्ठायां कुम्भदोषे प्रायश्चित्तम्

**स.६९.७० - ७४**

कुम्भे प्रमाणहीने च स्फोटकालादिसंयुते।
वस्त्रयुग्मे च रत्नेषु यथोक्तेष्वायुधादिषु।।

सौवर्णादिषु हीनेषु न स्याद्देवस्य सन्निधिः।
तस्मात् स्वर्णान्युपादाय पुनः क्षिप्त्वा प्रयत्नतः।।

जुहुयात् पौरुषं सूक्तं विष्णुसूक्तं च वैष्णवम्।
पृथगेव त्रयस्त्रिंशन्मुनिमन्त्रं तु विंशकम्।।

ब्राह्मं चैव त्रयस्त्रिंशदाग्नेयं च दशैव तु।
पारमात्मिकमींकाराद्यष्टाशीतिश्च हूयते।।

ब्राह्मणान् भोजयित्वा च दक्षिणां गुरवे ददेत्।
ऐहिकामुष्मिकं श्रेयो भुक्त्वा निःश्रेयसं व्रजेत्।।

**क्रि.२२.६२ - ६६**

**वि.६५.४०४, ४०५**

कुम्भे प्रमाणहीने खण्डादिदोषयुक्ते वस्त्रवर्णचिह्नादिषु हीनेषु च तस्मिन् देवो न रमेत। तस्मात् यत्नेन तानि विक्षिप्य, वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं

ब्राह्मं, मुनिमन्त्रम्, आग्नेयं च दशकृत्वो जुहुयात्। ब्राह्मणभोजनं कृत्वा, आचार्याय दक्षिणां दद्यात्।

**प्र.२७.४६ - ४८**

**ज्ञा.१०१.१९१**

प्रमाणहीने कुम्भस्य महान् दोषो भवति। मानहीनेमहाव्याधिः, कृष्ण-मण्डलेऽर्थहानिः, स्फुटिते पुत्रहानिः, खण्डिते जातिभ्रंशः, वर्णहीने मरणं भवति। तस्मात् सलक्षणमेवाचरेत्। अलक्षणे आहते तमपहाय वैष्णवं वास्तुदैवत्यं हुत्वा समारभेत।

**९.३.७५ प्रतिष्ठायां कुम्भपूजकेषु भ्रमणादिदर्शनशान्तिः**

**वि.१०१. १९१**

कुम्भपूजनकाले च आचार्यादीनां भ्रमणचलननिद्रालस्य मोहक्रोधलो-भाद्यनर्थदर्शने महाशान्तिं हुत्वा विप्रशतं भोजयित्वा गवादिलक्षणं दत्वा अन्यगुरुं सङ्गृह्य यागमारभेत। वस्त्रालाभेऽथ कुम्भस्य वैष्णवं वारुणं हुत्वा हिरण्यं दक्षिणां दद्यात्।

**नि.३२**

**९.३.७६ प्रतिष्ठायां साधितकुम्भे भिन्ने शान्तिः**

**वि.६५. ४०५**

साधिते कुम्भे भिन्ने वैष्णवं विष्णुसूक्तं पुरुषसूक्तं ब्राह्ममैन्द्रमाग्नेयमार्षं च विंशतिकृत्वो हुत्वा आचार्यदक्षिणां दत्त्वा विप्रान् भोजयित्वा, अन्यं कुम्भं सङ्गृह्य, पूर्ववत् साधयेत्।

**प्र.२७. ४९ - ५१**

**स.६९. ७५ - ७९**

कुम्भे च साधिते भिन्ने प्रमादात् पतितेऽथवा।
राष्ट्रस्य यजमानस्य राज्ञो दोषो महान् भवेत्।।

प्रजापीडा भवेत् क्षिप्रं व्याधिश्च मरणं तथा।
तद्दोषशमनार्थाय प्रायश्चित्तं समाचरेत्।।

वैष्णवं शतशो हुत्वा ब्राह्मं च शतशो यजेत्।
शतशः पौरुषं सूक्तं विष्णुसूक्तं तथा यजेत्।।
आर्षकं च त्रयस्त्रिंशदाग्नेयं विंशतिर्यजेत्।
पञ्चविंशति गा दत्त्वा पश्चाद्विप्रांश्च भोजयेत्।।

अन्यं कुम्भं गृहीत्वैव पूर्ववत् स्थापयेद् बुधः।

**क्रि.२२.६६ - ६८**

भिन्ने तु साधिते कुम्भे पतिते वा प्रमादतः।।

तस्य दोषस्य शान्त्यर्थं वैष्णवं ब्राह्मसंयुतम्।
पौरुषं विष्णुसूक्तं च प्रत्येकं तु शताष्टकम्।।

हुत्वा द्विसप्त गा दत्त्वा पश्चाद्विप्रांश्च भोजयेत्।
कुम्भमन्यत्[1] समादाय पूर्ववत् साधयेत् पुनः।।

**वा.४६**

कृतं साध्यघटं चात्र हीने च पतिते सति।।

ब्राह्मं च वैष्णवं चैव पौरुषं सूक्तमेव च।
विष्णुसूतथाऽऽर्षेयं शतमष्टाधिकं यजेत्।।

---

1. कुम्भमन्यं (?)

उक्तवत् कुम्भमादाय पूजयित्वा यजेत् क्रमात्।

**खि.३४.४४, ४५**

कुम्भे तु साधिते भिन्ने प्रमादात् पतितेऽपि वा।
तद्दोषशमनार्थं तु हुनेद् ब्राह्मं च वैष्णवम्।।

ईकारादींश्च जुहुयात् पुनः संस्थापनं चरेत्।

**ज्ञा.१०१. १९२**

कुम्भे यदि प्रभिन्ने सर्वप्रजामरणं भवति, तस्मात् भ्रंशं दुःखान्तं विज्ञाय विष्णुयागं तथा कृत्वा हिरण्यभूगवाश्वादीन् दत्त्वा पुनः समारभेत। विष्णुगायत्र्या प्रणवाद्यया समिदाज्य चरुभिः आहुतिसहस्रमब्जाग्नौ हुत्वा पुण्याहं प्रवाच्य आशीर्भिरभिनन्द्य द्वादशनिष्कं तदर्धं वा दक्षिणां दत्त्वा आरभेतेति भृगुः। महाशान्तिं हुत्वा आरभेदिति अङ्गिराः।

**नि.३२**

**य.४५.१०, ११**

तथैव साधितं कुम्भं भिन्नं चेत्तु प्रमादतः।।

अन्यं कुम्भं समादाय साधयेत् पूर्ववद् गुरुः।

## ९.३.७७ प्रतिष्ठायां कलशन्यासविपर्यासे प्रायश्चित्तम्

**वि.६५.४०६**

कौतुकादिबेराणां चतुर्दशकलशन्यासविपर्यासे वैष्णवं पङ्क्तीशदैवत्यं च -------------प्रत्येकं दशपर्यायतो जुहुयात्।

**प्र.२७.६५**

## ९.३.७८ प्रतिष्ठायां स्नपनकाले बेरविपर्यासे प्रायश्चित्तम्

**वि.६५.४०६**

कौतुकादिबेराणां ------------- स्नपनकाले बेरविपर्यासे पञ्चवारुणं वैष्णवं च ----------- प्रत्येकं दशपर्यायतो जुहुयात्।

**प्र.२७.६६**

## ९.३.७९ प्रतिष्ठायां श्वकुक्कुटाद्यस्पृश्यैः कुम्भस्पर्शे प्रायश्चित्तम्

**स.६९.७९ - ८२**

श्वानकुक्कुटवाराहाद्यस्पृश्यैः पतितैरपि।।

साधिते तत्र संस्पृष्टे तत्कुम्भं संव्यपोह्य च।
अन्यं कुम्भं गृहीत्वैव पूर्ववत् स्थापयेद् बुधः।।

वैष्णवं ब्राह्मसंयुक्तं सौरमाग्नेयसंयुतम्।
घृतेन पौरुषं सूक्तं विष्णुसूक्तमतः परम्।।

अब्जाग्निमध्ये जुहुयात् प्रत्येकं च शताष्टकम्।
चतुर्दशैव गा दत्त्वा पश्चाद्विप्रान् सुपूजयेत्।।

**क्रि.२२.६९ - ७९ ; वा.४६**

**वि.६५.४०५**

श्वकुक्कुटाद्यैरस्पृश्यैः पतितैश्च साधिते कुम्भे स्पृष्टे तं व्यपोह्य, अन्यकुम्भं सङ्गृह्य, पूर्ववत् [1]वैष्णवं, विष्णुसूक्तं, ब्राह्मं, सौरमाग्नेयं च अग्नौ प्रत्येकम् अष्टाधिकशतकृत्वो हुत्वा साधयेत्। आचार्याय दक्षिणां दत्त्वा वैष्णवान् सम्पूजयेत्। (ब्राह्मणभोजनं च कारयेत्।)

**प्र.२७.५१ - ५३**

स्पृष्टे तु साधिते कुम्भे पतितैः कुक्कुटादिभिः।।

तद्व्यपोह्यान्यदादाय पूर्ववत् साधयेत्तथा।
वैष्णवं विष्णुसूक्तं च पुरुषसूक्तं तथैव च।।

ब्राह्मं सौरमथाग्नेयम् अष्टाधिकशतं यजेत्।
आचार्यदक्षिणां दद्यात् वैष्णवान् पूजयेद् बुधः।।

**ज्ञा.१०१,१९२**

उच्छिष्टाशुचिकाकादिदर्शनेतं त्यक्त्वा अन्यमादाय महाशान्तिं हुत्वा आचार्यमनुज्ञाप्याराध्यारभेत।

**नि.३२**

### ९.३.८० शयनाधिवासे वस्त्रदोषे प्रायश्चित्तम्

**वि.६५. ४०४**

वस्त्रे लक्षणहीने छेदादियुक्ते च तत् त्यक्त्वा, अन्यदाहृत्य, श्रीदैवत्यं, वैष्णवं च यजेत्।

**स.६६.६६ ; क्रि.२२.५८ ; प्र.२७.४२, ४३**

### ९.३.८१ शयनाधिवासे पञ्चशयनाभावे प्रायश्चित्तम्

**स.६९.६७, ६८**

अलाभे त्वण्डजादीनां प्रत्येकं वस्त्रमेव वा।
तत्तत्प्रतिनिधिं ध्यात्वा शयनान्यास्तरेत् क्रमात्।।

वैष्णवं भूमिदैवत्यं श्रीदैवत्यं शतं यजेत्।

**क्रि.२२.५९, ६०**

1. साधितकुम्भभेदवत्

**वि.६५. ४०२**

अण्डजादीनामलाभे प्रत्येकं वस्त्रमाहृत्य, वैष्णवं श्रीभूमिदैवत्यं च जुहुयात्।

**प्र.२७.४३, ४४**

**खि.३४.४०**

विहीने शयने चैव तद्दैवत्यं हुनेत् सकृत्।
शास्त्रोक्तेन विधानेन प्रोक्तं प्रतिनिधिं हरेत्।।

**ज्ञा.१००.१९०**

शयनालाभे अम्बराण्यत्र कल्पयेत्।

## ९.३.८२ शयनाधिवासे कौतुकादिबेरशयनविपर्यासे प्रायश्चित्तम्

**वि.६५.४०३**

कौतुकादिबेराणां ---------------- शयनविपर्यासे वैष्णवं श्रीभूमिदैवत्यं च, प्रत्येकं दशपर्यायतो जुहुयात्।

**प्र.२७.६७**

शयने चेद्विपर्यासो वैष्णवं श्रीमहीमनून्।
कलशस्नानशयने प्रत्येकं दशशो हुनेत्।।

## ९.३.८३ शयनाधिवासे शयनस्थानविपर्यासे प्रायश्चित्तम्

**ज्ञा.१००.१९०**

शयनस्थानविपर्यासे सौरं वैघ्नं सौदर्शनं वैष्वक्सेनं जुहुयात्।

**नि.३२**

### १.३.८४ शयनाधिवासे शयनस्थानविपर्यासादौ प्रायश्चित्तम्

**य.४५.१३ - १५**

शय्यास्थानविपर्यासे चाण्डजादिविपर्यये।।

धान्यानामप्यलाभे तु उपधानविपर्यये।
वैष्णवं तत्तद्दैवत्यं श्रीभूसूक्तसमन्वितम्।।

व्याहृत्यन्तं च सभ्याग्नौ हुत्वाऽन्ते विधिना चरेत्।

### १.३.८५ प्रतिष्ठायाम् अकाले शयानदेवोद्धरणे प्रायश्चित्तम्

**क्रि.२२.८४, ८५**

उद्धृते शयिते बिम्बे पूर्वमर्कोदयात्तथा।
चतुष्कृत्वस्तु जुहुयात् देव्योर्मन्त्रान् सवैष्णवान्।।

शयनं कल्पयित्वाऽन्यत् शाययित्वा यथा पुरा।
मुहूर्ते समनुप्राप्ते प्रतिष्ठामाचरेत् पुनः।।

**स.६९.१०१, १०२**

**प्र.२७.७१**

शयानमुद्धरेद्देवमकाले चाप्यमन्त्रकम्।
हुत्वा श्रीभूमिदैवत्यं चतुष्कृत्वस्तु शाययेत्।।

**वि.६५.४०७**

**य.४५.१६, १७**

शयनाद्देवदेव्योश्च मोहादुत्थापने सकृत्।।

श्रीभूसूक्तं चतुः कृत्वा शाययेत् पूर्ववत् सुधीः।

**ज्ञा.१००.१९०**

शयनस्थो देव उत्थापितश्चेत् वैष्णवं श्रीभूमिदैवत्यं हुत्वा अन्यत् शयनमाकल्प्य पुनः शाययेत्।

**नि.३२**

**खि.३४.४१**

शयनस्थमकाले तु बेरमुद्धृत्य चाक्रमात्।
देवदेव्योर्मूर्तिमन्त्रैः हुत्वा तत्रैव शाययेत्।।

## ९.३.८६ रात्रौ प्रतिष्ठाकरणे प्रायश्चित्तम्

**ज्ञा.१०१.१९२**

रात्रौ प्रतिष्ठा चेत् सर्वदोषकरं तस्मादाग्नेयं वैष्णवं सौरं च पृथगष्टसहस्रं हुत्वा पुनः दिवैव स्थापनं कुर्यात्।

**खि.३४.६४, ६५**

यदि रात्रौ प्रतिष्ठा स्यात् सर्वथा सर्वदोषकृत्।
आग्नेयं जुहुयात् सौरं सहस्रं चाष्टसंयुतम्।।

ब्राह्मणान् भोजयेच्चापि तावत्सङ्ख्यान् विशेषतः।।

## ९.३.८७ प्रतिष्ठायां बहुद्रव्यक्रियालोपादौ प्रायश्चित्तम्

**क्रि.२२.७ - १३**

बहुद्रव्यक्रियाहीने क्रियाणां च विपर्यये।।

कुम्भपूजाविहीने च ध्यानहीने विपर्यये।
स्नपने च विहीने वै तथा कौतुकबन्धने।।

शयने च तथा हौत्रे देवतावाहने तथा।

तथा होमेषु हीनेषु विपर्यासे च केषु च।।

रत्नन्यासादिहीने च ध्रुवकौतुकयोस्तथा।
आचार्यबुद्धिक्षोभे च प्रतिष्ठायां विशेषतः।।

तस्मिन् काले महोत्पाते दुर्निमित्तस्य दर्शने।
एवं महाप्रतिष्ठायां दोषान्तरसमागमे।।

पुनः प्रतिष्ठा कर्तव्या तस्य दोषस्य शान्तये।
अक्ष्युन्मेषाधिवासौ च रत्नादिन्यासमेव च।।

एतान् पुनः प्रतिष्ठायां नाचरेदिति शासनम्।
यद्यत् तेषु विहीनं स्यात् तत्तत् कृत्वा समाचरेत्।।

**स.६९.१३ - १८**

बहुद्रव्येषु हीनेषु क्रियासु च बहुष्वपि।।

बहुष्वपि विपर्यासे मन्त्रहीने बहुष्वपि।
कुम्भपूजाविहीने च ध्यानहीने विपर्यये।।

स्नपने च विहीने च हीने च शयने तथा।
हौत्रशंसनहीने च देवाह्वाने तथैव च।।

प्रधानहोमे हीने च विपर्यासेषु तेषु च।
उद्देशत्यागहीने च देवस्योत्थापने तथा।।

हीने त्रिषवणस्नाने तत्क्रियायां विपर्यये।
रत्नादिन्यासहीने च पीठे वै कौतुकस्य च।।

आचार्यबुद्धिभ्रंशे च प्रतिष्ठायां विशेषतः।
यथोक्तेनैव मार्गेण प्रतिष्ठां पुनराचरेत्।।

## ९.३.८८ गुणहीनस्थापककृते स्थापने प्रायश्चित्तम्

**क्रि.२२. १ - ४**

यथोक्तगुणहीनेन गुरुणा स्थापकादिभिः।
उक्तदोषयुतैर्वापि स्थापिते पुरुषोत्तमे।।

त्रिरात्रं तां महाशान्तिम् अब्जाग्नौ जुहुयात् पुनः।
उक्तलक्षणसम्पन्नगुरुणा स्थापयेत् पुनः।।

यत् स्थानं यदधीनं स्यात् स तस्याचार्य उच्यते।
स चेदयुक्तस्त्वन्येन सर्वकर्माणि कारयेत्।।

स कुर्यादन्य आचार्यः तदनुज्ञापुरःसरम्।
अन्यथा यजमानस्य ग्रामस्य च विपद् भवेत्।।

**स.६९. १ - ४**

**ज्ञा.१००. १८९**

स्थापकैः दोषयुक्तैः अन्यैरनुक्तैश्च स्थापिते पूर्ववद्धुत्वा विप्रशतं भोजयित्वा हिरण्यभूगवादिदक्षिणां दत्त्वा पुनः स्थापनं कुर्यात्।

**नि.३२**

**प्र.२६.११२, ११३**

अविधिज्ञैरथाचार्यैः ऋत्विग्भिः स्थापकैस्तथा।।

स्थापितं बेरमादाय चालयित्वा यथाविधि।
विधिज्ञैः स्थापनं विद्वान् कारयेदत्वरं तथा।।

**वा.४६**

अत ऊर्ध्वं प्रवक्ष्यामि प्रतिष्ठानिष्कृतिक्रमम्।
आचार्येणाप्यनुक्तेन कृतं तत्रैव निष्फलम्।।

मन्त्रस्यापठितं चैव यथाशास्त्रस्य पाठकम्।
तयोरत्र कृतं कर्म निष्फलं त्विति शासनम्।।

तस्मात् सर्वप्रयत्नेन गुरुसिद्धोपदेशतः।
तन्नियोगं तु यत् कर्म तस्यैवार्थप्रवृद्धिदम्।।

अन्यत्रैव कृतं कर्म आभिचारिकमुच्यते।
तद्दोषस्यैव शान्त्यर्थं पौण्डरीके विशेषतः।।

महाशान्तिं त्रिरात्रं तु हुत्वा तद्देशिकोत्तमः।
पुनः प्रतिष्ठां कुर्वीत आचार्येणैव कारयेत्।।

तदभावे च तत्पुत्रं शिष्यं पौत्रमथापि वा।
अथवा तन्नियुक्तेन कारयेदिति केचन।।

विपरीताचरे चैव दोषं तस्यैव शान्तये।
अब्जाग्निं साधयित्वैव महाशान्तिं यजेत् ततः।।

अन्यथाकृतमत्रैव तद्ग्रामयजमानयोः।
अर्थतेजोविनाशं च अल्पायुश्च भवेन्नरः।।

तस्मात् सर्वप्रयत्नेन उक्तवत् कर्म चाचरेत्।

## १.३.८९ अनुक्तनक्षत्रादौ स्थापने प्रायश्चित्तम्

**क्रि.२२.५, ६**

पौण्डरीके महाशान्तिम् एकाहं जुहुयात् पुनः।
अनुक्तपक्षनक्षत्रराशिषु स्थापने कृते।।

पुनः प्रतिष्ठामार्गेण प्रतिष्ठां पुनराचरेत्।

**ज्ञा.९९, १८९**

अथ स्थापनानुक्तनक्षत्रे मुहूर्ते स्थापिते अब्जाग्नौ धात्रादिभूतान्तं च हुत्वा ब्राह्मणान् भोजयित्वा पुनः स्थापनं कुर्यात्।

**क्रि.२०. २०७ - २११**

आर्द्राद्यनुक्तनक्षत्रे वारे राशौ च निन्दिते।।

उल्काग्न्यशनिपाते च दिग्दाहे पांसुलोहिते।
वर्षधारातिपाते च चन्द्रसूर्योपरागयोः।।

चैत्यवृक्षनिपाते च भूमिकम्पदिने तथा।
दोषयुक्ते च नक्षत्रे शर्वर्यां वा तथैव च।।
स्थापितं चेत् तदज्ञानात् पूर्ववद्धोममाचरेत्।
सहस्राहुतिभिरिष्ट्वैव सहस्रं चैव वैष्णवम्।।

परिषद्देवतानां च तत्तन्मन्त्रैश्च हूयते।
यथोक्तं स्थापयित्वैव शक्तितो दक्षिणां ददेत्।।

**स. ६७. ७३ - ७७**

**वा.४६**

नक्षत्रशून्यवारश्च काणान्धयुतमेव च।
ध्रुवस्य कौतुकादीनां नाचरेद्देशिकोत्तमः।।

राष्ट्रान्तरगते राज्ञि तद्राष्ट्रे च विशेषतः।
विष्ण्वादिसर्वदेवानां स्थापनं नाचरेद्बुधः।।

अनुक्ते मुहूर्ते नक्षत्रे तिथिवारादि सर्वशः।
स्थापनं ध्रुवबेरादि नाचरेदिति शासनम्।।

निरीक्षिते शुभे चैव ग्रहयुक्ते तु लग्नके।

अन्धकाणादिनक्षत्रे देवादिस्थापनं न च।।

अज्ञानात् स्थापने चैव तद्ग्रामयजमानयोः।
राष्ट्रं नृपतिराचार्यो विनश्यति न संशयः।।

एकेक्षणमहीने चेद्देवानां स्थापनं चरेत्।
ग्रामं जनपदं सर्वं विनश्यति न संशयः।।

अनावृष्ट्यर्थनाशाय अल्पायुरिति कीर्तितम्।
एवं दोषयुते स्थाप्य देवमत्रैव चालयेत्।।
पश्चाद्विधिज्ञमाहूय विधिना स्थापयेत् पुनः।

**स.६९.११, १२**
नक्षत्रे दोषयुक्ते च राशौ दोषसमायुते।।

प्रतिष्ठायां कृतायां च पुनः स्थापनमाचरेत्।

## ९.३.९० बेरस्थापनस्थानवैपरीत्ये प्रायश्चित्तम्

**स.६८.८१ - ९०**
सलक्षणं कृतं बेरं विधिना स्थापयेद्यदि।
ब्राह्मिकं मध्यमे स्थाने दैविकं तदनन्तरम्।।

मानुषं दैविकान्तर्ये पैशाचं भित्तिपार्श्वतः।
ब्रह्मस्थाने स्थापितं चेद् ब्रह्मक्षत्रविनाशनम्।।

मानुष्ये न रमेद्देवः पैशाचे सर्वनाशनम्।
मानुष्ये किञ्चिदाश्रित्य दैविके स्थानकं भवेत्।।

पूर्वस्मिन्नेव सम्प्रोक्तं स्थानकासनयोः स्थितिः।
देवमानुषभागाभ्यां शयनं च विशेषतः।।

सुस्थितं विधिवत् स्थाप्य सुदृढं दक्षिणोन्नतम्।
ऊर्ध्वदृष्टिमधोदृष्टिं नाचरेत् तिर्यगीरितम्।।

लीनं छिन्नं तथाव्यक्तं स्थापयेन्न च धर्मवित्।
ऋजुदृष्टिं सौम्यदृष्टिं स्थापयेदिति शासनम्।।

एतेषामन्यथा चेत्तु शान्तिं तत्रैव कारयेत्।
आलयात् पश्चिमे कुर्यात् अब्जाग्निं च सलक्षणम्।।

आघारं पूर्ववत् कुर्यादग्निं प्रज्वाल्य मन्त्रतः।
वैष्णवं चैव जुहुयात् तद्दैवत्यं शताष्टकम्।।

ईंकारादीनि हुत्वा तु चाष्टाशीतिस्तु हूयते।
ब्राह्मणान् भोजयित्वा तु आचार्यं पूजयेत्तदा।।

सलक्षणं च हुत्वा तु विधिना स्थापयेत्पुनः।

**क्रि.२१.१३५ - १३८**

**९.३.९१ जलाधिवासात् परं स्थापनात् पूर्वं बेरस्याङ्गहानौ प्रायश्चित्तम्**

**वि.६२.३९३**

जलाधिवासात् पश्चात् स्थापनात् पूर्वं देवदेव्यादीनाम् अङ्गहानिः चेत्, वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, श्रीसूक्तं, महीसूक्तं, ब्राह्मं, रौद्रं, मुन्योः मन्त्रं च हुत्वा, तदङ्गहीनं सन्धानं कृत्वा, अयुक्तं विधिवत् त्यक्त्वा, पुनर्बेरं समाहृत्य स्थापयेत्।

**प्र.२६.७३ - ७६**

**य.४४.५१, ५२**

शिलास्थापनकाले तु चाङ्गहीनं भवेद्यदि।

शिलाबेरेऽथ लोहे वा शान्तिं हुत्वा पुनः सुधीः।।
सन्धानस्य तु योग्यं चेत् सन्धानं कारयेत् तथा।
अन्यथा चेत् विसृज्यैव बेरमन्यत् समाहरेत्।।

**ज्ञा.९९.१८७**

**नि.३२**

ध्रुवार्चा याऽङ्गहीनं चेदक्षिमोचनपूर्वतः।।
तत् त्यक्त्वा अन्यमादाय पुनस्तत्स्थापनं चरेत्।
महाशान्तिं च पञ्चाहम् अब्जाग्नौ जुहुयात् क्रमात्।।

## ९.३.९२ प्रमाणहीनबेरस्थापने (प्रमाणहीनविमाने) प्रायश्चित्तम्

**वि.६४.३९८**

अप्रमाणे विमाने प्रमाणहीनं बेरमज्ञानात् स्थापितं चेत्, तत् राजराष्ट्रविनाशाय भवति। तद्दोषशमनार्थं महाशान्तिं हुत्वा, तद्विमानं तत्तद्बेरं च विधिना कृत्वा, विधिवत् स्थापयेत्।

**प्र.२६.१३५ - १९३**

## ९.३.९३ ध्रुवस्थापनादर्वाक् प्रतिष्ठातश्च प्राक् अनुक्तदोषप्रायश्चित्तम्

**प्र.२६.१६६ - १६८**

ध्रुवस्य स्थापनादर्वाक् प्राक् प्रतिष्ठाविधेस्तथा।।
अनुक्तनिष्कृतिं वक्ष्ये कापिलेन घृतेन वै।
पद्माग्नौ वैष्णवं विष्णुसूक्तं सूक्तं च पौरुषम्।।
श्रीभूदैवत्यमन्त्रांश्च जुहुयाद् व्याहृतीर्बुधः।
तत्तत्कर्म पुनः कुर्यात् अन्यथा निष्फलं भवेत्।।

**वि.६४.४०१**

ध्रुवस्थापनात् पश्चात् महाप्रतिष्ठायाः पूर्वमनुक्तप्रायश्चित्तं वक्ष्ये-कापिलेन घृतेन पद्माग्नौ वैष्णवं, विष्णुसूक्तं, श्रीभूमिदैवत्यं व्याहृत्यन्तं यजेत्।

### ९.३.९४ ग्रामादौ बलिलोपे बलिदानक्रमः

**नि.३२**

तद्रात्रौ बलिहीने च ग्रामादिषु च वास्तुषु।।

'ये भूता' इति मन्त्रेण शतमष्टोत्तरं यजेत्।
ग्रामभूतबलिं दद्यात् दिक्पालानां प्रदेशके।।

ब्रह्मादीशानपर्यन्तं तत्तन्नाम्ना बलिं क्षिपेत्।
ग्राम्यादिशून्यवास्तु चेदेवमेव बलिं ददेत्।।

इन्द्रादीशानदेशेषु स्थाननाशो भवेद्यदि।
इन्द्रस्थानविहीनं चेद्ब्रह्मस्थाने बलिं ददेत्।।

अग्निस्थानविहीनं चेद्वरुणे वायुमर्चयेत्।
कुबेरस्थानहीनं चेत् वायुदेशे बलिं क्षिपेत्।।

शम्भोः स्थानविहीनं चेत् कुबेरे शम्भुमर्चयेत्।
एवमेव बलिं दद्यात् स्थाननाशं भवेद्यदि।।

### ९.३.९५ बेरस्थापनविलम्बे प्रायश्चित्तम्

**क्रि.२०.२०५ - २०७**

शीघ्रं संस्थापयेद् बेरं निर्दोषं लक्षणान्वितम्।
न स्थापयति चेन्मोहात् आधिव्याध्याद्युपद्रवैः।।

क्षुत्पिपासादिभिश्चैव स देशः पीड्यते भृशम्।
तस्माद्धुत्वा महाशान्तिं भोजयित्वा द्विजोत्तमान्।।

प्रतिष्ठोक्तक्रमेणैव प्रतिष्ठां पुनराचरेत्।

**९.३.९६ विमानसमाप्तौ ध्रुवबेरस्थापनलोपे प्रायश्चित्तम्**
**प्र.२६.६० - ६७**

विमानस्य समाप्तौ तु मासादूर्ध्वं तु तत्र वै।
ध्रुवस्थापनहीने तु वैष्णवं जुहुयात् ततः।।

विष्णुसूक्तं तथा रौद्रम् ऐन्द्रमाग्नेयमेव च।
वारुणं बार्हस्पत्यं च श्रीभूदैवत्यमेव च।।

शान्तिं हुत्वा विधानेन दद्यादाचार्यदक्षिणाम्।
ब्राह्मणान् भोजयित्वैव पूजयित्वा तु वैष्णवान्।।

ध्रुवबेरं प्रतिष्ठाप्य विधिना सम्यगर्चयेत्।
एवं मासद्वयेऽतीते द्विगुणं निष्कृतिर्भवेत्।।

मासत्रये तु त्रिगुणम् एवमावत्सरं भवेत्।
संवत्सरे व्यतीते तु दोषो भूयान्महत्तरः।।

सप्ताहं तु महाशान्तिं हुत्वाऽब्जाग्नौ विधानतः।
ब्राह्मणान् भोजयेत् पश्चात् विधिना सर्वमाचरेत्।।

सप्तवर्षे तु सप्ताहं प्रथमादिक्रमेण वै।
केचिदिच्छन्ति मुनयः सप्ताहान्तमिदं चरेत्।।

अत ऊर्ध्वं कर्षणादि पुनःसंस्कारमाचरेत्।

**वि.६२.३९२**

**स.६६.६९ - ८२**

विमाने ध्रुवबेरं तु प्रतिष्ठाप्य ततः परम्।।

ध्रुवबेरे तथा हीने मासातीते च बुद्धिमान्।
स्वायम्भुवाग्निं सम्पाद्य विष्णुसूक्तं यजेद्बुधः।।

विच्छिन्नं चैव हुत्वा तु मिन्दाहुत्या च हूयते।
सप्त इध्मांश्च जुहुयाद्देवं चैवानुमान्य च।।

भूमिदानं ततः कृत्वा तत्तत्कर्म समाचरेत्।
द्वितीये पूर्ववद्धुत्वा दक्षिणां च ददेच्छुभाम्।।

तृतीये त्रिगुणं कुर्यादेवं संवत्सरान्तकम्।
सहस्राहुति हुत्वा तु (सहस्राहुतिकं हुत्वा)? विष्णुसूक्तसमन्वितम्।।

सहस्रभोजनं कृत्वा गुरवे दक्षिणां ददेत्।
संवत्सरमतीते (संवत्सरे व्यतीते?) तु पौण्डरीकं तु कारयेत्।।

प्राच्यामाहवनीयं तु अन्वाहार्यं तु दक्षिणे।
प्रतीच्यां गार्हपत्यं तु आवसथ्यं तथोत्तरे।।

आघारं पूर्ववत् कृत्वा सहस्राहुतिवैष्णवम्।
विष्णुसूक्तं च जुहुयात् तद्धोमे च तथाष्टकम्।।

दिग्दैवत्यं च हुत्वा तु दक्षिणां च ददेत् तथा।
विप्राणां भोजनं कृत्वा दक्षिणां च स्वशक्तितः।।

द्वितीये द्विगुणं कुर्यात् तृतीये त्रिगुणं चरेत्।
एवं तु वर्धयित्वा तु द्वादशाब्दं प्रति प्रति।।

द्वादशाब्दे व्यतीते तु कर्षणादीनि कारयेत्।

स्वायम्भुवाग्निमध्ये तु यद्देवापि सुहूयते।।

पञ्चवारुणसंयुक्तं जुहुयात् पारमात्मिकम्।
ईकारादीनि हुत्वा तु अङ्गहोमं ततः परम्।।

जुहुयात् पौरुषं सूक्तं विष्णुसूक्तमतः परम्।
एवं हुत्वैव शान्त्यर्थं ब्राह्मणान् भोजयेत् पुनः।।

पञ्चनिष्कं सुवर्णं च दद्यादाचार्यदक्षिणाम्।
वास्तुहोमं ततो हुत्वा पुण्याहं वाचयेत् ततः।।

**९.३.९७ प्रतिष्ठाविपर्यासे प्रायश्चित्तम्**

**खि.३४.६३**

प्रतिष्ठायां विपर्यासे सौरं होमं समाचरेत्।।

**९.३.९८ प्रतिष्ठायां रोदनादौ शान्तिः**

**नि.३२**

रोदने रुधिरस्रावे कलहे पतनादिषु।
शान्तिहोमं ततः कृत्वा दक्षिणादि प्रदीयताम्।।

**ज्ञा.१००.१९०**

**९.३.९९ प्रतिष्ठाकालिकमरणादौ शान्तिः**

**ज्ञा.१००.१९०**

मरणे अन्त्यजप्रवेशे च महाशान्तिं हुत्वा ब्राह्मणान् भोजयित्वा शान्तिं प्रवाच्य समाचरेत्।

**नि.३२**

## ९.३.१०० प्रतिष्ठाकालिकमहोत्पातादौ प्रायश्चित्तम्

**स.६९.१९ - २५**

तस्मिन् काले महोत्पाते दुर्निमित्तादिदर्शने।
शिवास्वरादिदोषेषु दृष्टेष्वन्येषु चैव हि।।

एवं महाप्रतिष्ठायामुक्तदोषे विशेषतः।
पुनः प्रतिष्ठा कर्तव्या तस्य दोषस्य शान्तये।।

तस्यां पुनः प्रतिष्ठायां विशेषश्च प्रवक्ष्यते।
अक्ष्युन्मेषाधिवासौ द्वौ रत्नादिन्यासमेव च।।

एतान् पुनः प्रतिष्ठायां नाचरेदिति शासनम्।
अक्ष्युन्मोचनहीने तु कृत्वा चैवाक्षिमोचनम्।।

अधिवासनहीने तु पुनः कृत्वाधिवासनम्।
रत्नादिन्यासहीने तु तान् न्यस्येत्तथा च वै।।

पञ्चाग्नीनेव सभ्यादीन् कल्पयेत यथाविधि।
पूर्वोक्तविधिना तेषु जुहुयादग्निषु क्रमात्।।

सभ्याग्निं पौण्डरीकाग्निमग्नी द्वाविति केचन।
एष एव विशेषस्तु शेषं पूर्ववदाचरेत्।।

## ९.३.१०१ ध्रुवबेरं विना कौतुकप्रतिष्ठायां प्रायश्चित्तम्

**वि.६१.३९१**

समाप्ते विमाने अज्ञानादर्थलोभाद्वा ध्रुवबेरं विना कौतुकं स्थापितं चेत्, तदाभिचारिकं भवति, ग्रामस्य यजमानस्य राज्ञो राष्ट्रस्य च विनाशो भवति। तस्मात् महाशान्तिं त्र्यहं हुत्वा, वैष्णवान् सम्पूज्य, ब्राह्मणान् भोजयित्वा, 'क्षमस्वे'ति देवं प्रार्थ्य, बालालये प्रतिष्ठाप्य, ध्रुवबेरं, ध्रुवार्चाबेरं वा, स्थापयेत।

**प्र.२६.५६ - ५९**

## ९.३.१०२ कौतुकबिम्बस्य आलयान्तरे स्थापने प्रायश्चित्तम्

**स.६८.५६ - ६२**

एकस्मिन्नालये बिम्बं स्थापितं कौतुकं तथा।।

अन्यत्र स्थापितं चेत्तदज्ञानाद्वा प्रमादतः।
व्याधिदुर्भिक्षपीडाद्यैर्विनाशं च भवेत्ततः।।

क्षिप्रं शान्तिं ततः कुर्याद्दक्षिणादिसमन्वितम्।
आलयादुत्तरे तद्वदब्जाग्निं च समाहरेत्।।

आघारं पूर्ववत् कृत्वा वैष्णवं जुहुयाद् बुधः।
तद्दैवत्यं च जुहुयात् परिषद्देवतान्वितम्।।

ब्रह्मसूक्तेन संयुक्तं रुद्रसूक्तसमन्वितम्।
पारमात्मिकमींकाराद्यष्टाशीत्यङ्गहोमकम्।।

रात्रिसूक्तं च जुहुयाद्विश्वजित्सूक्तमेव च।
ब्राह्मणान् भोजयेत् पश्चाद्दक्षिणां च ददेत् पुनः।।

आचार्यं पूजयित्वा तु पूर्वस्थाने तथैव च।
पूर्वोक्तविधिना पश्चात् स्थापनं सम्यगाचरेत्।।

**क्रि.२१.६० - ६३**

[अत्र ब्राह्मणभोजन-दक्षिणादान-आचार्यपूजनानि नोच्यन्ते।]

**य.४८.२२, २३**

अन्यालयार्चितं बिम्बमज्ञानादालये तथा।
स्थापितं चेद्विनाशः स्यात्तस्माच्छान्तिं समाचरेत्।।

अपहायैव तद्बेरं शीघ्रं पूर्वालये बुधः।
तथैव स्थापनं कृत्वा विधिनैव समर्चयेत्।।

## ९.३.१०३ कौतुकादिषु कुम्भजलेनावाहने प्रायश्चित्तम्

**वि.६५.४०८**

ध्रुवबेरात् कौतुकादिषु दीपाद्दीपमिव आवाहयेत्। अज्ञानात् कुम्भजलेन तेषामावाहने कृते महत्तरो दोषो भवति। ततः शीघ्रं शुद्धोदकेन 'इषे त्वोर्जेत्वे'ति स्नापयित्वा देवमनुमान्य, वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं च हुत्वा पूर्ववत् ध्रुवबेरादावाहयेत्।

**प्र.२७.९९ - १०१**

## ९.३.१०४ कौतुकबिम्बे अवस्थानवैपरीत्ये प्रायश्चित्तम्

**क्रि.२१.१३ - १७**

यदाकारं ध्रुवं कुर्यात्तदाकारं तु कौतुकम्।।

आसीनं वा स्थितं वापि शयानं नैव कौतुकम्।
स्थानके स्थानकं प्रोक्तमासने स्थानकासने।।

आसीनं स्थानकं वापि शयाने परिकल्पयेत्।
स्थापितं विपरीतं चेत् त्रयस्त्रिंशद् गणान् यजेत्।।

वैघ्नं सौरं गारुडं च शान्तिं वै पाञ्चभौतिकम्।
दुर्गासूक्तं विष्णुसूक्तं सूक्तं तत् पौरुषं यजेत्।।

ब्राह्मणान् भोजयित्वा तु पुण्याहमपि वाचयेत्।
यथोक्तं कौतुकं कृत्वा प्रतिष्ठामाचरेत् पुनः।।

**स.६८.५ - ९**

ध्रुवबेरं तु यद्रूपं तद्रूपं कौतुकं भवेत्।
आसनं स्थानकं चाथ शयनं चाथ कौतुकम्।।

आसने स्थानकं वापि शयाने स्थानकासने।
अन्यथा स्थापिते चास्मिन्नज्ञानेन विपर्यये।।

त्रयस्त्रिंशान् गणान् हुत्वा वैघ्नं सौरसमन्वितम्।
गारुडं वैष्वक्सेनं च पाञ्चभौतिकसंयुतम्।।

दुर्गासूक्तं विष्णुसूक्तं श्रीसूक्तं पौरुषं यजेत्।
दक्षिणां च ततो दद्यात् ब्राह्मणान् भोजयेत्ततः।।

पुण्याहं वाचयित्वा तु यथोक्तं कौतुकं तथा।
पूर्वोक्तविधिना सम्यक् प्रतिष्ठां कारयेद् बुधः।।

## ९.३.१०५ कौतुकबिम्बस्फोटनादिप्रायश्चित्तम्

**स.६८.२० - २४**

स्फुटिते च विवर्णे च उक्तलक्षणवर्जिते।।

जर्ज्झरैरपि संयुक्तेऽप्यन्तःसुषिरसंयुते।
एवं दोषसमायुक्ते कौतुके स्नपनेऽपि वा।।

अन्यद्बिम्बं समादाय प्रायश्चित्तं सुहूयताम्।
इष्ट्वा च पौरुषं सूक्तं विष्णुसूक्तं च वैष्णवम्।।

यद्देवादि च हुत्वैव ब्राह्ममैन्द्रं च हूयताम्।
वायव्यं गारुडं हुत्वा वैष्णवं च शताष्टकम्।।

महाव्याहृतिभिर्हुत्वा पूर्ववत् स्थापयेत् पुनः।

**क्रि.२१.२९ - ३१**

[अत्र यद्देवादीत्यस्य स्थाने कूष्माण्डमिति दृश्यते।]

**९.३.१०६ ध्रुवबेराङ्गहानौ प्रायश्चित्तम्**

**क्रि.२१.१२६ - १३४**

अङ्गहीनं यदि भवेद् ध्रुवबेरं तदेव हि।
अयुक्तं यदि चोद्धर्तुं कौतुकस्नपनौत्सवाः।।

कृत्वा च दारवं बिम्बं याचितं बिम्बमेव वा।
बालालये प्रतिष्ठाप्य नवीकरणमाचरेत्।।

महाप्रतिष्ठामार्गेण प्रतिष्ठां पुनराचरेत्।
(भिन्ने घटे यथाकाशं महाकाशे प्रलीयते।।
बेरनाशे तथा शक्तिः विश्वस्मिन्नेव लीयते।)
प्राक्प्रत्यग् दक्षिणादिक्षु विदिक्षु च तथाऽऽनते।।

कुक्षिच्छिद्रे तथा दीर्घे पार्श्वहीने कटिक्षये।
ऊरुजङ्घाक्षये चैव मुखशोषे तथैव च।।

मकुटे दोषसंयुक्ते सर्वोपाङ्गक्षये तथा।
प्रमाणपरिहीने च पादगुल्फक्षये तथा।।

कर्णनासाक्षये चापि क्षिप्रं शान्तिं च कारयेत्।
आलयाद्दक्षिणे चाग्नौ जुहुयात् पारमात्मिकम्।।

ईकारादींश्च जुहुयात् अष्टाशीत्याहुतिं तथा।
तद्दैवत्यं च जुहुयात् अष्टोत्तरसहस्त्रकम्।।

ब्राह्मणान् भोजयित्वैव दद्यादाचार्यदक्षिणाम्।
तत्तल्लक्षणसम्पन्नं कृत्वा संस्थापयेत् पुनः।।

**स.६८.७१ - ८०**

बेरे तु लक्ष्मतो हीने यद्यत्तत्फलमुच्यते।
दक्षिणावनते मृत्युः पश्चिमे चार्थनाशनम्।।

उत्तरे धनधान्यर्द्धिः कुलवृद्धिश्च पूर्वतः।
कुक्षिच्छिद्रे तु दुर्भिक्षमुरश्छिद्रे धनक्षयः।।

कृशे दीर्घे कृशत्वं स्यात् पार्श्वहीने सुहृत्क्षयः।
कटिहीने पुत्रनाश ऊरौ भार्याविनाशनम्।।

जङ्घादोषो वाहनानां विनाशमुपपद्यते।
मुखे च मुकुटे दोषैर्द्रव्यभोगायुषां क्षयः।।

सर्वोपाङ्गविहीने तु सर्वनाशमवाप्नुयात्।
प्रमाणे परिहीने तु देशग्रामविनाशकृत्।।

पादगुल्फेषु दोषेण पादहानिस्तथैव च।
कर्णनासाविहीनेषु कर्णनासाविनाशकृत्।।

भुजयोश्चक्रशङ्खौ च विहीनौ तु विनाशकौ।
एते दोषाः समाख्याताः प्रतिमायां यथा तथा।।

आलयाद्दक्षिणे पार्श्वे पौण्डरीकाग्निकुण्डके।
आघारं पूर्ववत् कृत्वा चाग्निं प्रज्वाल्य मन्त्रतः।।

पारमात्मिकमींकारमष्टाशीतिश्च हूयते।
तत्तद्दैवत्यं जुहुयात् सहस्रं चाष्टसंयुतम्।।

ब्राह्मणान् भोजयित्वा च दक्षिणां च ददेत् पुनः।
तत्तल्लक्षणसम्पूर्णं कारयित्वा यथाविधि।।

## ९.३.१०७ ध्रुवबिम्बविनाशे प्रायश्चित्तम्

**खि.३४.७५, ७६**

विनष्टे ध्रुवबिम्बे तु भेदच्छेदादिदूषणैः।

निर्माय च परं बिम्बं स्थानेऽन्यत्र तु स्थापयेत्।।

सर्वत्र च महाशान्तिपूर्वं स्यात् प्रोक्षणं हितम्।
मृण्मयं जीर्णबेरोक्तविधिना सन्त्यजेद्बुधः।।

## ९.३.१०८ ध्रुवबेरनाशे प्रायश्चित्तम्

**वि.६३.३९५**

ध्रुवे नष्टे पूर्वद्रव्येण उत्कृष्टद्रव्येण वा बेरं सलक्षणं कृत्वा, प्रतिष्ठां कारयेत्।

**प्र.२६.१०५**

## ९.३.१०९ बिम्बभेदनादौ प्रायश्चित्तम्

**स.६७.७१ - ७३**

समाप्तेरथ तद् बिम्बे छिन्ने भिन्ने प्रमादतः।
महादोषो भवेत् तत्र तद् ग्रामयजमानयोः।।

कुर्यात्तस्य महाशान्तिमब्जाग्नौ वै विशेषतः।
विच्छिन्नं चैव हुत्वा तु ब्राह्मणान् भोजयेत्पुनः।।

दक्षिणां गुरवे दद्यात् पूर्ववत् सर्वमाचरेत्।

## ९.३.११० ध्रुवबेरचालने प्रायश्चित्तम्

**वि.६३.३९६**

यथाविधि यथास्थानं स्थापितं निर्दोषं बेरं न चालयेत्। तदज्ञानाच्चालितं चेत्, राज्ञो राज्यस्य चाशुभाय नाशाय भवति। तद्दोषशमनार्थं पद्माग्नौ महाशान्तिं हुत्वा, विप्रशतं भोजयित्वा, सुवर्णदानं गोदानं च कृत्वा, पुनः प्रतिष्ठां कारयेत्।

आचार्यैरविधिज्ञैः स्थापितं बेरं क्षिप्रं चालयित्वा यथाविधि विधिज्ञैः पुनः स्थापयेत्। विधिज्ञैः स्थापितं बेरं चालितं चेत्, शान्तिं हुत्वा, वैष्णवान् सम्पूज्य, यथास्थानं यथाविधि स्थापयेत्।

**प्र.२६.११४**

विधिज्ञैः स्थापितं बेरमज्ञानाच्चालितं यदि।
शान्तिं हुत्वा विधानेन विधिज्ञैः स्थापयेत् पुनः।।

## ९.३.१११ विमानध्रुवबेरचालने पुनःप्रतिष्ठा

**वि.६३.३९६**

विमानं ध्रुवं च, नदीतटाकसमुद्रसम्बाधमहावातादिना येन केनचिच्चालितं चेत्, तद्बेरं भूमौ पिधाय, तत्स्थाने पूर्ववद्विमानं कृत्वा, ध्रुवबेरम् अचलं स्थापयेत्।

अथवा, तत्समीपे ग्रामादौ सति तत्र विविक्ते देशे मनोरमे तथैव विमानमुत्कृष्टं वा कृत्वा, तद्बेरं सपरिषत्कमाहृत्य, संस्थाप्य, विधिनार्चयेत्। ग्रामादौ हीने तस्माच्छतदण्डादूर्ध्वं विस्तीर्णे देशे पूर्ववत् विमानं कृत्वा तद्देवं स्थापयेत्।

**प्र.२६.११५ - ११९**

**वि.६४.४००**

ग्रामादीनामालयस्य च विनाशे, तद्बेरमाहृत्य, आलयान्तरे यावत्कालमर्चनं युक्तं तावत्कालं यथालाभमर्चयेत्।।

## ९.३.११२ शिलाबेरस्य अन्यालयादपहरणे प्रायश्चित्तम्

**प्र.२६.१०८ - ११२**

अन्यालयादपहृतम् अनिष्पन्नक्रियं तथा।

शिलाबेरं यदि स्यात् तद्भूमौ सम्यक् पिधाय च।।

विधिनाहृत्य संस्कारं कृत्वा स्थापनमाचरेत्।
शिल्पिना विधिपूर्वं तु कृतं बेरं तथा चरेत्।।

यथाविधि यथास्थानं स्थापितं दोषवर्जितम्।
बेरं न चालयेद्यस्मात् राजराष्ट्रविनाशनम्।।

तद्दोषशमनार्थाय पञ्चाग्नौ जुहुयात् क्रमात्।
सप्ताहं तु महाशान्तिं कुर्याद् ब्राह्मणभोजनम्।।

दद्यात् सुवर्णं गां भूमिं प्रतिष्ठां पुनराचरेत्।

**वि.६३. ३९५**

## ९.३.११३ अन्यालयस्थापितबिम्बस्य अन्यालयस्थापने प्रायश्चित्तम्

**वि.६४.४००**

अन्यालये स्थापितं ध्रुवं कौतुकं वा, अज्ञानादन्यालये स्थापितं चेत्, तद्दोषशमनार्थं महाशान्तिं हुत्वा, वैष्णवान् सम्पूज्य, ब्राह्मणान् भोजयित्वा पूर्वस्थाने विधिना स्थापयेत्।

**प्र.२६.१६०, १६१**

**स.६८.४५, ४६ ; ६९.१३२ - १३५**

शैलजं मृण्मयं वाथ दारवं ताम्रमेव च।
विमाने स्थापितं पूर्वं ध्रुवबेरं ततः परम्।।

आदायान्यविमाने तु स्थापयेन्न कदाचन।
अन्यत्र स्थापितं चेत्तु महाशान्तिश्च हूयताम्।।
दारवं शैलजं वाथ ताम्रजं राजतं तु वा।।

सौवर्णं वाथ तद्बिम्बमन्यमुद्दिश्य कल्पितम्।
विमाने स्थापितं बिम्बं नान्यत्र स्थापयेत् पुनः।।

स्थापितं चेत्तदज्ञानान्महादोषो भविष्यति।
क्षिप्रं तस्मान्महाशान्तिं हुत्वा दक्षिणया युताम्।।

तत्तद्बिम्बं समादाय पूर्वत्र स्थापयेत् तथा।
**क्रि.२१.५१ - ५३ ; २२.९७, ९८**

**९.३.११४ प्रतिष्ठापितबेरत्यागे प्रायश्चित्तम्**

**क्रि.२१.३२ - ३५**

प्रतिष्ठाप्य कृतं बेरं त्यक्त्वाऽन्यत् स्थापयेद्यदि।
आलयस्योत्तरेऽब्जाग्नौ विष्णुसूक्तं जुहोति च।।

दौर्गं च पौरुषं सूक्तं ब्रह्मसूक्तं यजेत् पुनः।
रुद्रसूक्तं ततो हुत्वा पुनराहवनीयके।।

वैष्णवं व्याहृतीश्चापि महाव्याहृतिसंयुतम्।
हुत्वा साष्टशतं बेरं पूर्वं संस्थापयेत् पुनः।।

ततोऽन्यत्र नवं बेरं स्थापयित्वा समर्चयेत्।
अन्यालयार्थं वा दद्यात् याचितं चेन्महत्फलम्।।

**९.३.११५ स्थापिते महाबेरे संस्कारलोपप्रायश्चित्तम्**

**वि.६४.४००**

स्थापिते महाबेरे मासादूर्ध्वं संस्कारहीने वा, अब्जाग्नौ वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, श्रीभूमिदैवत्यं, ब्राह्मं रौद्रं, पारिषदं, हुत्वा आरभेत।

मासद्वयेऽतीते द्विगुणं, मासत्रये त्रिगुणम्, एवं संवत्सरान्तं वर्धयेत्। संवत्सरान्ते पुनः स्थापयेत्। द्वादशवर्षे अतीते विमानस्य कर्षणादि पुनःसंस्कारं बेरस्य शिलाशूलग्रहणमन्यत् सर्वं च कृत्वा, पुनः प्रतिष्ठां कारयेत् इत्याह मरीचिः

**प्र.२६.७७ - ८०**

**य.४४.५८ - ६०**

स्थापिते च महाबेरे मासातीते च मोहतः।
संस्कारहीने वाऽब्जाग्नौ वैष्णवं शान्तिमाचरेत्।।

द्विमासे द्विगुणं प्रोक्तं त्रिमासे त्रिगुणं चरेत्।
एवं संवत्सरान्तं च वर्धयेन्मन्त्रवित्तमः।।

एवं संवत्सराद्यादि द्वादशाब्दावसानकम्।
कर्षणादि पुनः कृत्वा प्रतिष्ठान्तां समाचरेत्।।

### ९.३.११६ स्थापिते महाबेरे अङ्गभङ्गे प्रायश्चित्तम्

**य.४४.५३**

स्थापिते च महाबेरे त्वङ्गहीनं भवेद्यदि।
आदाय विसृजेद् बेरं क्षिप्रं शान्तिं च कारयेत्।।

### ९.३.११७ बिम्बचलने पुनःप्रतिष्ठा

**खि.३४.६५, ६६**

प्रतिष्ठितं क्वचिद् बेरं चलितं चेत् प्रमादतः।।
तद्दैवत्यं च जुहुयात् प्रतिष्ठां पुनराचरेत्।

## ९.३.११८ बेरोत्पाटने पुनःप्रतिष्ठा

**वि.६३.३९५**

नरवृषगजाद्यैः उत्पाटितं बेरमहीनाङ्गं चेत्, बेरशुद्ध्यर्थं जलाधिवासं कृत्वा, तत्स्थाने रत्नन्यासं कृत्वा, पुनः प्रतिष्ठां कारयेत्।

**प्र.२६.१०६, १०७**

**खि.३४.८८ - ९२**

उत्पाटितं शिलाबेरं हीनाङ्गं सम्भवेद्यदि।
गजैर्वृषैर्मनुष्यैर्वा पुनः संस्कारकर्मणि।।

भूमौ खनित्वा निक्षिप्य प्रच्छाद्य च मृदा ततः।
कुशकाशान् समास्तीर्य जलेनाप्लाव्य तां भुवम्।।

सकाल उद्धृत्य शिलां शिलाग्रहणवर्त्मना।
कृत्वा चोचितसंस्कारान् स्थापयेद्विधिवद् बुधः।।

बालस्थाने कृते चेत्तु नवकर्मसु सर्वथा।
सहस्राहुतिहोमं च सहस्रद्विजभोजनम्।।

कृत्वैवोक्तविधानेन पुनः संस्थापनं चरेत्।

## ९.३.११९ परिषद्देवावाहनादौ विपर्ययादि-प्रायश्चित्तम्

**वि.६५.४०७**

परिषद्देवानामावाहनजुष्टाकारस्वाहाकारार्चनेषु विपरीतेषु हीनेषु च वैष्णवं विष्णुसूक्तं ब्राह्मं रौद्रं च दशपर्यायतो जुहुयात्।

**प्र.२७.६९**

**नि.३२**

सर्वदेवाह्वानहीने विपरीते तथैव च।
तत्तन्मन्त्रं च जुहुयात् व्याहृतीभिः समन्वितम्।।

जुष्टाकारविहीने तु स्वाहाकारे तथैव च।
प्रायश्चित्तं ततो हुत्वा पूर्ववत् कारयेद्बुधः।।

### ९.३.१२० प्रतिष्ठायां भूपरीक्षादिलोपे प्रायश्चित्तम्

**क्रि.८.९२ - ९६ ; २०.२१२ - २१५**

श्रद्धाभक्ती पुरस्कृत्य त्वरितो येन केनचित्।
अकृत्वा भूपरीक्षादीन् विनाचार्यं पदार्थिभिः।।

स्थापनानुक्तनक्षत्रमासादौ स्थापयेद्यदि।
सुमास - पक्ष - नक्षत्र - मुहूर्तेषु यथाविधि।।

मासं पक्षं च सप्ताहं पञ्चाहं वा त्र्यहं तु वा।
त्रिकालं पौण्डरीकाग्नौ महाशान्तिं जुहोति वै।।

तत्तन्मन्त्रजपं कुर्यात् भूपरीक्षादिकर्मणाम्।
कृत्वाङ्कुरार्पणं पश्चात् नयनोन्मीलनं तथा।।

पञ्चगव्याधिवासादि कुर्याद्यत्नेन पूर्ववत्।
प्रतिष्ठोक्तक्रमेणैव प्रतिष्ठां पुनराचरेत्।।

अकृत्वा भूपरीक्षादिक्रियाः सर्वाः प्रमादतः।
अनुक्तमासनक्षत्रतिथिवासरराशिषु।।

रात्राववििधिकं मोहात् अज्ञानात् स्थापिते यदि।
मासं पक्षं तु सप्ताहं पञ्चाहं त्रियहं तु वा।।

त्रिकालं पौण्डरीकाग्नौ महाशान्तिं जुहोति वै।
तत्तन्मन्त्रजपं कृत्वा भूपरीक्षादिकर्मणाम्।।
पूर्वोक्तेन प्रकारेण प्रतिष्ठां पुनराचरेत्।

## ९.३.१२१ अध्ययनलोपे प्रायश्चित्तम्

**प्र.२७.७२**

हीने चाध्ययने सारस्वतमष्टाधिकं शतम्।
प्रायश्चित्तं च हुत्वैव यथाशास्त्रं समाचरेत्।।

**वि.६५.४०७**

**य.४५.१७, १८**

तथैवाध्ययने हीने परिषद्देवतार्चने।।
नृत्तगेयादिहीने च तत्तन्मन्त्रं क्रमाद्धुनेत्।

## ९.३.१२२ प्रतिष्ठाविध्यतिक्रमे प्रायश्चित्तम्

**य.४४.४९ - ५०**

अर्थलोभाच्च मोहाद्वा यथोक्तं नाचरेद्यदि।
महाशान्तिं च सप्ताहमब्जाग्नौ जुहुयात् क्रमात्।।
आचार्यदक्षिणां दत्त्वा अनुज्ञाप्याभिपूज्य च।
यथोक्तं कारयेत् पश्चात् 'क्षमस्वे'ति प्रणम्य च।।

## ९.३.१२३ आचार्यदक्षिणाकालातिक्रमे प्रायश्चित्तम्

**वि.६५.४०७**

आचार्यदक्षिणाकालातीते वैष्णवं, मुनिमन्त्रम् अष्टोत्तरशतं हुत्वा, यथोक्तदक्षिणां

दद्यात्। अल्पदक्षिणायागो यजमानं हन्ति। सदक्षिणो यज्ञः फलमनन्तं ददाति। तस्माद्यज्ञस्य दक्षिणा जीवो भवेत्।

**प्र.२७.७८, ७९**

**क्रि.२२.८७ - ९०**

यथोक्तदक्षिणाहीने आचार्यस्यर्त्विजामपि।।

पदार्थिनस्त एवात्र तत्कर्मफलमाप्नुयुः।
हन्त्यल्पदक्षिणो यागः यजमानं न संशयः।।

भ्रूणहत्यामवाप्नोति यजमानो न संशयः।
अष्टोत्तरशतं हुत्वा मुनिमन्त्रं च वैष्णवम्।।

दक्षिणां च पुनस्तेभ्यो दद्यादेव यथोचितम्।

**स.६९.१०६, १०७**

## ९.३.१२४ प्रतिष्ठायां अन्नदानलोपे प्रायश्चित्तम्

**प्र.२७.७९, ८०**

ब्राह्मणानामन्नदाने विहीने शान्तिमाचरेत्।।

त्रियहं तु महाशान्तिस्तद्दोषविनिवारिणी।

## ९.३.१२५ देवार्थद्रव्यदाहे प्रायश्चित्तम्

**स.६९.९८ - १००**

प्रमादाद्यागशालायां द्रव्ये वस्त्रादिकेऽपि वा।।

प्रपादौ वापि श्वभ्रे च देवार्थं कल्पिते पुनः।
अन्यस्मिन् तत्र दग्धे च द्रव्येऽनुक्ते च सर्वशः।।

वैष्णवं ब्राह्मसंयुक्तं सौरमाग्नेयसंयुतम्।

आज्येनाग्नौ सुहोतव्यं प्रत्येकं चैकविंशतिः।।

**क्रि.२२.८२, ८३**

**वि.६५.४०६**

वस्त्रादिद्रव्ये दर्भादौ प्रपायां वा अन्यस्मिन् देवार्थं कल्पिते अग्निना दग्धे वैष्णवं ब्राह्मं सौरमाग्नेयं च प्रत्येकं दशपर्यायतो जुहुयात्।

**प्र.२७.६३, ६४**

## ९.३.१२६ गौणबिम्बस्थापने प्रायश्चित्तम्

**स.६८.२४ - २८**

कनकं राजतं ताम्रं शैलजं दारवं तथा।।

मुख्यं विहाय गौणं तु स्थापितं चेत् प्रमादतः।
आलयस्योत्तरे पार्श्वे पौण्डरीके विधानतः।।

विष्णुसूक्तं दुर्गासूक्तं सूक्तं तत् पौरुषं यजेत्।
ब्रह्मसूक्तं च हुत्वा तु रुद्रसूक्तं तथैव च।।

होमं चाहवनीयाग्नौ क्रमेणैव सुहूयताम्।
वैष्णवं च ततो हुत्वा व्याहृत्या च समायुतम्।।

महाव्याहृतिसंयुक्तं तद्धोमं च शताष्टकम्।
हुत्वैव विधिना सम्यक् स्थापयेदिति शासनम्।।

**स.६८.१६ - २०**

लोहजं त्वर्चनाबिम्बं पूर्वं यत्तत् प्रतिष्ठितम्।।

त्यक्त्वान्यत् स्थापयेद्यत्तदाभिचारिकमुच्यते।
दिग्देवतानामष्टानां प्रत्येकं होममाचरेत्।।

पुरुषसूक्तं च हुत्वा तु विष्णुसूक्तमतः परम्।
श्रीसूक्तं चैव जुहुयाद्दुर्गासूक्तं च वैष्णवम्।।

अङ्गहोमं ततो हुत्वा विश्वजित्सूक्तमेव च।
एवं हुत्वा विधानेन शक्तितो दक्षिणां ददेत्।।

पूर्वं तद्बिम्बमादाय स्थापयेत् तद्विचक्षणः।

**क्रि.२१.२५ - २८**
[अत्र होमान्ते यथाशक्ति दक्षिणादानं न दृष्टं कुत्रापि]

**९.३.१२७ पञ्चमूर्तिप्रतिष्ठायां पृथग्घोमाद्यभावे प्रायश्चित्तम्**

**स.६९.१०७ - ११०**
पञ्चमूर्तिप्रतिष्ठायां तद्द्वाराभिमुखे तथा।।

मण्टपं वा प्रपां वाथ कृत्वा पूर्वोक्तमार्गतः।
अग्निकुण्डानि तत्रैव शयनं तत्र कारयेत्।।

तत्तद्धोमः सुहोतव्यः यथोक्तविधिना ततः।
प्रत्येकं स्नपनादीनि सर्वाणि च समाचरेत्।।

अज्ञानात् स्नपनादीनि न पृथक् चेत् समाचरेत्।
तत्तद्धोमे सुहोतव्यं तत्तन्मन्त्रसहस्रकम्।।

**क्रि.२१.९० - ९२**

**९.३.१२८ पञ्चमूर्तिप्रतिष्ठायां क्रियाविपर्यासादिप्रायश्चित्तम्**

**स.६९.१११ - ११४**
क्रियायाश्च विपर्यासे मन्त्राणां सङ्करेऽपि च।
बिम्बानां विपर्यासे ऋत्विजां च विपर्यये।।

आचार्याणां च विपर्यासे नक्षत्रे दोषसंयुते।
सर्वेष्वपि च दोषेषु प्रायश्चित्तं च पूर्ववत्।।

शान्तिरित्येव निर्दिष्टा सर्वत्रापि च वैष्णवैः।

आश्राविताद्यैर्हुत्वा च मिन्दाहुतिसमायुतैः।।

नारायणाय विद्मेति शं नो मित्रश्शमित्यपि।
विष्णोर्नुकाद्यैर्जुहुयात् तत्तद्दोषस्य शान्तये।।

**१.३.१२९ कर्षणादिप्रतिष्ठान्तायां सर्वक्रियायांविपर्यासे प्रायश्चित्तम्**

**खि.३४.६१ - ६३**

होमान्ते सर्वशान्त्यर्थं सूक्तं वैश्वानरं जपेत्।।

ध्यायेत् कर्मसमृद्ध्यर्थं देवं वैश्वानरं प्रभुम्।
यज्ञेश्वरोऽन्तर्यामी हि भगवान् पुरुषोत्तमः।।

प्रीतः कर्मफलं दद्याद् आराध्यः सर्वकर्मभिः।

**खि.३४.५५, ५६**

व्याहृतीभिश्च जुहुयात् सर्वदोषेषु वैष्णवम्।
वैष्णवं सर्वदोषोपशमनं कर्मसिद्धिदम्।।

आग्नेयं वैष्णवं चापि सव्याहृतिकमुत्तमम्।

**वा.४६**

सर्वक्रियाविपर्यासे सकृन्मन्त्रं तथैव च।।

यज्ञकर्मणि सर्वत्र हीने न्यूने विपर्यये।
वस्त्रे लक्षणहीने च भिन्ने च्छिन्ने तथैव च।।

दत्त्वान्यत् सर्वमादाय कारयेद्देशिकोत्तमः।
प्रमाणहीने न्यूने च तोरणादौ पृथक् पृथक्।।

दर्भमालाविहीने च कुम्भे दोषयुते तथा।
एतैर्दोषो यदि स्यात् तु प्रायश्चित्तं यजेत् क्रमात्।।

वैष्णवं विष्णुसूक्तं च श्रीभूसूक्तयुतं पुनः।

सौरमाग्नेयसंयुक्तं जुहुयाद्देशिकोत्तमः।।

पृथक् पृथक् च कर्तव्यं पूर्ववत् सर्वमाचरेत्।

**स.६७.४५ - ५२**

कर्षणादिप्रतिष्ठायां हीने न्यूने विपर्यये।।

तस्य सर्वस्य शान्त्यर्थमक्ष्युन्मेषणपूर्वकम्।
सौरं च पौण्डरीकाग्नौ कापिलेन घृतेन वै।।

विष्णुसूक्तं च जुहुयात् पौरुषं सूक्तमेव च।
यद्देवादींस्ततो हुत्वा पारमात्मिकमेव च।।

ईंकारादींश्च जुहुयादष्टाशीतिमतः परम्।
प्राजापत्यं तथा सौम्यमैन्द्रमाग्नेयमेव च।।

सौरं सौम्यं च जुहुयादङ्गहोमं सवैष्णवम्।
महाव्याहृतिभिर्हुत्वा परिषिच्य च पावकम्।।

हीनक्रियासु सर्वासु प्रायश्चित्तमिदं स्मृतम्।
ब्राह्मणान् भोजयित्वा तु दक्षिणां गुरवे ददेत्।।

पुण्याहं वाचयित्वा तु स्वस्तिघोषसमन्वितम्।
क्रियाहीने तु सर्वत्र प्रायश्चित्तमिदं भवेत्।।

गवादिदक्षिणां दत्त्वा पश्चात् कर्म समारभेत्।

**क्रि.२०.१८० - १८८**

कर्षणादि प्रतिष्ठान्तं न्यूने हीने विपर्यये।।

जुहुयात् पौण्डरीकाग्नौ सूक्ते वैष्णवपौरुषे।
यद्देवादींस्ततो हुत्वा पारमात्मिकमेव च।।

ईंकारादींश्च जुहुयात् अष्टाशीतिमतः परम्।

प्राजापत्यं च सौम्यं च ऐन्द्रमाग्नेयमेव च।।

सौरं सौम्यं च जुहुयात् अङ्गहोमं च वैष्णवम्।
महाव्याहृतिभिर्हुत्वा ब्राह्मणान् भोजयेत् पुनः।।

वाचयित्वा तु पुण्याहं स्वस्तिघोषं च कारयेत्।
दैविकेषु तु सर्वेषु भूपरीक्षादिकर्मसु।।

पुण्याहे विहिते सम्यक् यत् पुण्यमिति च ब्रुवन्।
पुण्याहं स्वस्तिमृद्धिं च वाचयित्वा त्रिधा त्रिधा।।

'स्वस्ति न ऋद्ध्याः स्मे'ति वाचयित्वान्तरान्तरा।
आपो हिरण्यपवमानैः प्रोक्षयित्वा ततः परम्।।

दक्षिणादानादाने च सूत्रोक्तविधिना चरेत्।
गवादिदक्षिणां दत्त्वा पश्चात् कर्म समाचरेत्।।

हीनक्रियासु सर्वासु प्रायश्चित्तमिदं स्मृतम्।

**९.३.१३० तटाकादिप्रतिष्ठालोपे प्रायश्चित्तम्**

**क्रि.२८.५८**

अन्यथा[1] यदि कुर्यात्तु प्रायश्चित्तं विधीयते।
महाशान्तिं सकृद्धुत्वा प्रतिष्ठां पुनराचरेत्।।

***

1. तटाकादिप्रतिष्ठां विना तटाकादिजलोपयोगम्

# ४. नित्यार्चनदोषप्रायश्चित्तम्

## ९.४.१ नित्यार्चनादोषप्रायश्चित्तफलम्

**य.४६.१**

अथ नित्यार्चनायां च प्रायश्चित्तं वदाम्यहम्।
शान्त्यर्थमपि सर्वेषां भुक्तिमुक्तिफलप्रदम्।।

## ९.४.२ नित्यार्चने आलयमार्जनादिलोपे प्रायश्चित्तम्

**प्र.२७.१०५, १०६**

मार्जनादिषु हीनेषु निर्माल्ये चाप्यशोधिते।।

वैष्णवं वारुणं हुत्वा वायव्यं शान्तमेव च।
यथावत् कारयेत् सर्वं मन्त्रेणैव पुनर्गुरुः।।

**वि.६६.४०९**

**क्रि.२४.१४, १६**

मार्जने च तथा हीने हीने चैवोपलेपने।।

'आपो - हिरण्य - पवमानैः' प्रोक्षयित्वोपलेपयेत्।
निर्माल्यशोधने हीने हीने चाभ्युक्षणे तथा।।

वैष्णवं वैष्वक्सेनं च वारुणं च यजेत् पुनः।

**स.७०.४, ५**

[अत्र मार्जनलोपे उपलेपनलोपे च प्रायश्चित्तं न विधीयते।]

**य.४६.४**

निर्माल्यशोधने हीने मार्जनोल्लेपने तथा।
वैष्णवं वारुणं सूक्तं वैष्वक्सेनं हुनेत् क्रमात्।।

**वा.४४**

मार्जने च तथा हीने हीने प्रोक्षणलेपने।
वायुमन्त्रं ततो हुत्वा भूसूक्तं च तथा यजेत्।।

---

वेद्यास्तु मार्जने हीने हीने निर्माल्यशोधने।।
ध्रुवसूक्तं ततो हुत्वा महाव्याहृतिमेव च।

### ९.४.३ अकाले आलयमार्जने प्रायश्चित्तम्

**य.४९.१२, १३**

मध्यरात्रे तु यो मोहान्मार्जन्या मार्जनं चरेत्।
देवालये निहन्त्याशु तदालयगतां श्रियम्।।
श्रीसूक्तेन घृताक्ताब्जं पौण्डरीके यजेत् सकृत्।

### ९.४.४ नित्यार्चने अर्चकादिस्नानलोपप्रायश्चित्तम्

**वा.४७**

यथोक्तमर्चकादीनां स्नानहीने विशेषतः।।
अघमर्षणसूक्तं तु जपित्वाष्टशतं बुधः।
हुत्वा तु सौरमन्त्रेण मुनिमन्त्रं च हूयताम्।।
सावित्र्याष्टशतं हुत्वा प्रत्येकं देशिकोत्तमः।
पुनः स्नानादिकं कुर्यान्नित्यपूजां समाचरेत्।।

### ९.४.५ ऊर्ध्वपुण्ड्रन्यासलोपे प्रायश्चित्तम्

**वा.४४**

ऊर्ध्वपुण्ड्रादिहीने च हीने तन्न्यासकर्मणि।।

पाञ्चभौतिकमन्त्रेण जपेच्चैव च बुद्धिमान्।

### ९.४.६ नित्यार्चने हर्म्यप्रदक्षिणादिलोपे प्रायश्चित्तम्

**वा.४७**

हर्म्यप्रदक्षिणे हीने परिषद्वन्दने तथा।
वैष्णवं च यजेच्चैव हुत्वा तद्द्वारदेवताः।।

### ९.४.७ नित्यार्चने युग्मप्रदक्षिणलोपे प्रायश्चित्तम्

**वा.४८**

उक्तप्रदक्षिणे हीने अनुक्तं सम्भवेद्यदि।
पौरुषं वैष्णवं जप्त्वा युग्मं चैवात्र कारयेत्।।

अयुग्मं विष्णुहर्म्ये तु प्रदक्षिणमथाचरेत्।
पूर्वार्जितं तु यत् पुण्यं विनश्यति न संशयः।।

तस्माच्चैव प्रयत्नेन युग्मं तत्र प्रदक्षिणम्।
तद्दोषशमनार्थाय स्नात्वा चाभ्युक्षणं चरेत्।।

वैष्णवं पौरुषं सूक्तं जपित्वात्र प्रणम्य च।
उक्तप्रदक्षिणं कृत्वा विधिना वन्दनं चरेत्।।

### ९.४.८ प्रणामदिग्विपर्यासे प्रायश्चित्तम्

**वा.४८**

अग्निनैर्ऋतवायव्यां न कुर्याद्देववन्दनम्।

अत्रैव वन्दनं कृत्वा महादोषो भवेत् पुनः।।

सहस्रशीर्षं देवं पुरुषसूक्तयुतं जपेत्।
क्षमस्वेति प्रणम्यैव पुनः कृत्वोक्तवच्चरेत्।।

एवमेव विपर्यासे संक्षेपेणोच्यते (?) मया।
तदूर्ध्वे वक्ष्यमाणः सन् तन्त्रसङ्करनिष्कृतिम्।।

### ९.४.९ विमानादीनामतिलङ्घने प्रायश्चित्तम्

**प्र.२७.२८० - २८२**

विमानं विष्णुरूपं स्यात् न तत् पादादिना क्रमेत्।
धामप्रदक्षिणे पूर्वं कुर्यात् तत्र नमस्क्रियाः।।

----------------------------------------

गोपुरस्य विमानस्य प्राकारस्यालयस्य च।।
प्रमादादतिलङ्घ्यैव प्राणायामशतं चरेत्।

### ९.४.१० नित्यार्चने कवाटोद्घाटनविलम्बप्रायश्चित्तम्

**य.४६.२, ३**

प्रातरर्कोदयात् पूर्वं मध्याह्नेऽस्तमये च वै।
कवाटोद्घाटने हीने शीघ्रमुद्घाटयेत् ततः।।

अभिवन्द्य तथा शान्तिं नित्याग्नौ वैष्णवं तथा।
तत्तद्द्वाराधिदैवत्यं श्रीभूसूक्तं हुनेत् सुधीः।।

**क्रि.२४.१ - ४**

अतः परं प्रवक्ष्यामि अर्चनाहीननिष्कृतिम्।
आदित्यस्योदयात् पूर्वं प्रातर्देवालयस्य च।।

सायमस्तमयात् पूर्वं मध्याह्नादह्नि मध्यमे।
कवाटोद्धाटने हीने शीघ्रमुद्धाटयेत् ततः।।

नित्याग्निकुण्डे चुल्यां वा परिषिच्य च पावकम्।
आज्येन चरुणा सौरैः जुहुयाद् द्वारदैवतैः।।
वैष्णवैरपि षण्मन्त्रैः पुनः कर्म समाचरेत्।

**स.७०.१ - ३**

**वि.६६.४०८, ४०९**

सूर्योदयात् मध्याह्नात् अस्तमयाच्च पूर्वं कवाटोद्धाटने हीने नित्याग्नौ चुल्यां वा अग्निं परिस्तीर्य आज्येन वैष्णवं धात्रादिदैवत्यं दौवारिकं च हुत्वा शीघ्रमुद्धाटयेत्।

**प्र.२७.१०२ - १०४**

**खि.३५.१, २**

अथातः सम्प्रवक्ष्यामि पितामहसमीरितम्।
सम्भावितानां दोषाणां विष्णोर्नित्यार्चनाविधौ।।

प्रातरर्कोदयात् पूर्वमकृते द्वारमोचने।
धात्रादीनां द्वारपानां मन्त्रैर्होमं समाचरेत्।।

**वा.४७**

कवाटोद्धाटने हीने हीने तद्दीपशून्यके।
कवाटमन्त्रं हुत्वा तु रुद्रमन्त्रं जुहोति वै।।

## ९.४.११ कवाटोद्धाटने अमन्त्रके प्रायश्चित्तम्

**प्र.२७.१०४, १०५**

अमन्त्रकमथान्यैर्वा कवाटोद्धाटने कृते।।
पूर्वोक्तां जुहुयात् शान्तिं जपेद् द्वादशसूक्तकम्।

### ९.४.१२ नित्यार्चने देववन्दनलोपादौ प्रायश्चित्तम्

**वा.४७**

देवस्य वन्दने हीने हीने पाणिप्रताडने।
वैष्णवं तु ततो हुत्वा अष्टाशीतिं यजेद् बुधः।।
उत्क्रमेण पुष्पादिन्यासं कुर्याद्विचक्षणः।

### ९.४.१३ नित्यार्चने पात्रशोधनलोपे प्रायश्चित्तम्

**वा.४४**

पात्रप्रक्षालने हीने रवेर्मन्त्रं जपेत् क्रमात्।

### ९.४.१४ नित्यार्चने अमन्त्रकं पूजाद्रव्यनयने प्रायश्चित्तम्

**क्रि.२४.४ - ८**

नीतं चेदर्चनाद्रव्यं जलपुष्पाद्यमन्त्रकम्।।
आलये वाथ संस्कुर्यात् तन्मन्त्रं द्विगुणं जपेत्।
अन्यसूत्रिभिरानीतं संस्कुर्यात् त्रिगुणं चरेत्।।
गृह्णीयाद् ब्राह्मणालाभे नेयं चेत् क्षत्रियादिभिः।
शङ्खचक्राङ्कितभुजैः पूर्वालाभे तथोत्तरैः।।
चतुर्वेदादि षट्कृत्वो जपं कुर्यात् पुनः पुनः।
वापयेन्नखकेशादीन् ते च पर्वणि पर्वणि।।
शुद्धाम्बरधराः स्नाताः शुद्धदन्तनखास्तथा।

### ९.४.१५ नित्यार्चने पूजाद्रव्याधिदेवतार्चनलोपे प्रायश्चित्तम्

**क्रि.२८.२८, २९**

पूजाद्रव्याधिदेवार्चामकृत्वा पूजयेद्यदि।

हुत्वा तद् द्रव्यदैवत्यं वैष्णवं व्याहृतीर्यजेत्।।
(द्रव्याधिदेवतापूजां कृत्वा तैरेव पूजयेत्।)

## ९.४.१६ मन्त्राणां ऋष्यादिज्ञानाभावे प्रायश्चित्तम्

**वा.४४**

ऋषिच्छन्दोधिदेवांश्च हीने च ब्रह्मणः स्मरन्।।

ऋषयः सर्वदैवत्यं ? ब्रह्मसूक्तं यजेद्बुधः।

**क्रि.२४.९८, ९९**

अविज्ञातेषु सर्वेषु मन्त्राणां तु पृथक् पृथक्।
ऋषिच्छन्दोऽधिदेवेषु छन्दोनुष्टुबिति स्मरेत्।।

अन्तर्यामी ऋषिः प्रोक्तः परमात्मा च देवता।
इति सामान्यतः स्मृत्वा पूजयेत् पुरुषोत्तमम्।।

## ९.४.१७ नित्यार्चने पुण्याहवाचनादिलोपे प्रायश्चित्तम्

**खि.३५.५**

विहीने चैव पुण्याहे पञ्चगव्योक्षणे तथा।
वारुणं रुद्रदैवत्यं हुत्वा प्रोक्षणमाचरेत्।।

## ९.४.१८ नित्यार्चने सम्बन्धकूर्चलोपे प्रायश्चित्तम्

**प्र.२७.११३, ११४**

सम्बन्धकूर्चहीने तु वैष्णवं मुनिमन्त्रकम्।।

हुत्वा सन्न्यस्य कूर्चं तु पश्चात् कार्यं समाचरेत्।

**वा.४४**

सम्बन्धकूर्चहीने च लङ्घने च विशेषतः।
प्रतद्विष्णुरितीह्युक्त्वा अधिपं मन्त्रमुच्चरन्।।

तत्तन्मन्त्रं सुहोतव्यं पौण्डरीके विशेषतः।
पुनः कूर्चं निधायैव विधिना सम्यगर्चयेत्।।

अथवा कारयेच्चैव कृत्वा तद्देशिकोत्तमः।
चले चैवाचले चैव तयोर्मध्ये विशेषतः।।

सम्बन्धस्य च कूर्चस्य क्षिप्त्वा तस्य समर्चयेत्।
सम्बन्धकूर्चके क्षिप्त्वा हीने गत्वा तु कौतुके।।

दत्वा कौतुकभोगं तु ध्रुवे चारोपयेद् बुधः।
हीने कूर्चे तु नित्ये च पूजनं यत् तदासुरम्।।

तस्मात् सर्वप्रयत्नेन क्षिप्त्वा नित्यं समर्चयेत्।
अथवा कारयेद्विद्वान् देवेशं न्यासमाचरेत्(?)।।

भवेद्दिग्बन्धने यत्र तत्र कूर्चं न चार्चयेत्।
अन्त्यवेलार्चनात् पूर्वं कूर्चस्य लङ्घनं न च।।

यदि स्याल्लङ्घनं यत्र तत्र दोषस्य शान्तये।
ब्राह्मं च वैष्णवं रौद्रं हुत्वा तत्र समर्चयेत्।।

## ९.४.१९ नित्यार्चने स्नपनलोपे प्रायश्चित्तम्

**प्र.२७.१०७ - ११०**

देवस्य स्नपने हीने वैष्णवं वारुणं हुनेत्।।

'आपो हिष्ठा'दिभिर्मन्त्रैः स्नापयेन्निष्कृतिर्भवेत्।
पश्चान्नित्यं प्रकुर्वीत स्नानं नित्यार्चनोदितम्।।

अशक्तौ स्नापने प्रोक्ष्य मन्त्रेण कुशवारिभिः।
वस्त्रादींश्च व्यपोह्यैव धौतवस्त्रं समर्पयेत्।।

नित्यं स्नानमशक्यं चेद्विष्णुपञ्चदिनेषु वै।
स्नापयेद्देवदेवेशमिति केचिद्वदन्ति हि।।

**वि.६६.४०९**

**स.७०.५ - ७**

अशक्तावभिषेकस्य देवेशं सम्प्रणम्य च।।

कुशोदकैः समभ्युक्ष्य पूर्ववस्त्रं विसृज्य च।
धौतेनैवान्यवस्त्रेण देवेशं परिधापयेत्।।

प्रातः स्नानविहीने तु वारुणं वैष्णवं यजेत्।

**क्रि.२४.१८**

बिम्बाभिषेकहीने तु वैष्णवं वारुणं यजेत्।

**य.४६.५**

नित्यस्नानविहीने तु वैष्णवं वारुणं तथा।
अभ्युक्षणं च वा कुर्याद् बिम्बशुद्ध्यर्थमेव च।।

**खि.३५.४**

श्रीदैवत्यं च श्रीसूक्तं ततः स्नपनमाचरेत्।
नित्यस्नपनहीने तु स्नपनं द्विगुणं चरेत्।।

## ९.४.२० नित्यार्चने पुष्पन्यासलोपे प्रायश्चित्तम्

**वि.६६.४०९**

ध्रुवबेरपीठे पूर्वविन्यस्तपुष्पाणि संशोध्य पुष्पन्यासं कुर्यात्। तेनैव ध्रुवबेरस्य नित्यार्चनं भवेत्। पुष्पन्यासं हित्वा कौतुकस्य नित्यार्चने कृते वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, विष्णुगायत्रीं च हुत्वा, तदेव पुष्पन्यासं कुर्यात्।

**प्र.२७.१११ - ११३**

**य.४६.६, ७**

कौतुकं चार्चयेन्मोहात् पुष्पन्यासं विना चरेत्।
वैष्णवं विष्णुसूक्तं च गायत्रीं जुहुयाद् बुधः।।

पुष्पन्यासं च कृत्वैव पूजयेत् त्रिषु सन्धिषु।
अन्यथा चेद्विनाशः स्यात् पूजकस्य विशेषतः।।

**स.७०.७ - १०**

ध्रुवबेरस्य दोषे च न्यस्तपुष्पाणि यानि वै।।

प्रातः काले व्यपोह्यैव सद्यः पुष्पाणि सन्न्यसेत्।
ध्रुवबेरस्य देवस्य तत्तन्नित्यार्चनं भवेत्।।

पुष्पन्यासे च हीने च कालातीते पुनस्तथा।
पुष्पन्यासं च कृत्वैव प्रायश्चित्तनिमित्ततः।।

विष्णुगायत्र्या सम्यग्दशकृत्वो यजेद् बुधः।
ब्रह्मादिद्वारदेवांश्च समभ्यर्च्यार्चयेद्धरिम्।।

**क्रि.२४.१८, १९**

**वा.४४**

पुष्पन्यासविहीने च कौतुकस्य तथैव च।।

तत्तन्मूर्तिं समुच्चार्य जुहुयात् तत्र वैष्णवम्।

## ९.४.२१ नित्यार्चने परिषदर्चनलोपे प्रायश्चित्तम्

**वि.६६.४०९**

धात्रादिपरिषदामर्चने हीने तत्तद्दैवत्यं वैष्णवं च हुत्वा पश्चात् परिषदोऽर्चयेत्।

**प्र.२७.११४, ११५**

**य.४६.८**

धात्रादिपरिवाराणां तथा नैवार्चयेद्यदि।

तत्तन्मन्त्रं च हुत्वान्ते विधिनैव समर्चयेत्।।

**क्रि.२४.२०, २१**

गर्भालयगतान् देवान् द्वारेशान् द्वारपालकान्।

समभ्यर्च्यार्चयेद्देवं हीने तेषामथार्चने।।

द्विगुणं तान् समभ्यर्च्य तत्तन्मन्त्रं सकृद्यजेत्।

## ९.४.२२ नित्यार्चने मार्कण्डेयाद्यावरणदेवार्चनलोपे प्रायश्चित्तम्

**वा.४७**

मार्कण्डेयं भृगुं चैव ब्रह्माणं शङ्करं तथा।।

एतद्देवार्चने हीने तत्तन्मूर्तिं सुहूयताम्।

वैष्णवेनागमाद्यादि न्यूनाधिक्याक्षरं यदि।।

तत्तत्क्रियाविभागेन दोषो नैवेति कीर्त्यते।

ध्यानमावाहनं चैव न्यासं चैवाह्नि पूजनम्।।

तथोद्वास्य पठंश्चैव कृत्वाचार्यो दिनं प्रति।

पूजकैराचरेदष्टविग्रहैरासनादिषु।।

### ९.४.२३ बिम्बस्य अर्चकान्यविप्रस्पर्शे प्रायश्चित्तम्

**क्रि.२४.७३**

अर्चकान्यद्विजैः स्पृष्टे शुद्धोदैरभिषेचयेत्।

**नि.३६**

### ९.४.२४ बिम्बस्य उच्छिष्टाद्यशुचिविप्रस्पर्शे प्रायश्चित्तम्

**क्रि.२४.७७**

उच्छिष्टाशुचिभिर्विप्रैः कुर्याच्छूद्रोक्तनिष्कृतिम्।

स्पृष्टे त्वाशौचवद्विप्रैः कुर्याच्छूद्रोक्तनिष्कृतिम्।।

### ९.४.२५ बिम्बस्य क्षत्रियस्पर्शे प्रायश्चित्तम्

**क्रि.२४.७४**

सप्तभिः क्षत्रियैः स्पृष्टे कलशैः स्नापयेद्धरिम्।

### ९.४.२६ बिम्बस्य वैश्यस्पर्शे प्रायश्चित्तम्

**क्रि.२४.७४, ७५**

स्नापयेद्वैश्यसंस्पर्शे चतुर्विंशतिभिस्तथा ।।

शान्तिहोमं च जुहुयात् शक्तितो भोजयेद् द्विजान्।

### ९.४.२७ बिम्बस्य शूद्रस्पर्शे प्रायश्चित्तम्

**क्रि.२४.७५, ७६**

अष्टोत्तरशतैः शूद्रैः संस्पर्शे स्नापयेत् तथा।।

महाशान्तिं ततो हुत्वा ब्राह्मणानपि भोजयेत्।

## ९.४.२१ नित्यार्चने परिषदर्चनलोपे प्रायश्चित्तम्

**वि.६६.४०९**

धात्रादिपरिषदामर्चने हीने तत्तद्दैवत्यं वैष्णवं च हुत्वा पश्चात् परिषदोऽर्चयेत्।

**प्र.२७.११४, ११५**

**य.४६.८**

धात्रादिपरिवाराणां तथा नैवार्चयेद्यदि।

तत्तन्मन्त्रं च हुत्वान्ते विधिनैव समर्चयेत्।।

**क्रि.२४.२०, २१**

गर्भालयगतान् देवान् द्वारेशान् द्वारपालकान्।

समभ्यर्च्यार्चयेद्देवं हीने तेषामथार्चने।।

द्विगुणं तान् समभ्यर्च्य तत्तन्मन्त्रं सकृद्यजेत्।

## ९.४.२२ नित्यार्चने मार्कण्डेयाद्यावरणदेवार्चनलोपे प्रायश्चित्तम्

**वा.४७**

मार्कण्डेयं भृगुं चैव ब्रह्माणं शङ्करं तथा।।

एतद्देवार्चने हीने तत्तन्मूर्तिं सुहूयताम्।

वैष्णवेनागमाद्यादि न्यूनाधिक्याक्षरं यदि।।

तत्तत्क्रियाविभागेन दोषो नैवेति कीर्त्यते।

ध्यानमावाहनं चैव न्यासं चैवाह्नि पूजनम्।।

तथोद्वास्य पठंश्चैव कृत्वाचार्यो दिनं प्रति।

पूजकैराचरेदष्टविग्रहैरासनादिषु।।

### ९.४.२८ बिम्बस्य अनुलोमस्पर्शे प्रायश्चित्तम्

**क्रि.२४.७६**

स्पृष्टेऽनुलोमैः शूद्रोक्तप्रायश्चित्तं समाचरेत्।।

### ९.४.२९ बिम्बस्य प्रतिलोमस्पर्शे प्रायश्चित्तम्

**क्रि.२४.७८**

प्रतिलोमैस्तु संस्पृष्टे जलादिष्वधिवास्य च।
महाशान्तिं च सप्ताहमब्जाग्नौ जुहुयात्ततः।।

प्रतिष्ठोक्तक्रमेणैव प्रतिष्ठां पुनराचरेत्।

### ९.४.३० बिम्बस्य वेददूषक तान्त्रिकस्पर्शे प्रायश्चित्तम्

**क्रि.२४.७९, ८०**

कारयेत् तान्त्रिकस्पर्शे प्रतिलोमोक्तनिष्कृतिम्।।

अवेदमूलाः समयास्तान्त्रिका वेददूषकाः।

### ९.४.३१ अमन्त्रकार्चने प्रायश्चित्तम्

**वा.४७**

अमन्त्रेणार्चने नित्यं भवेच्चैवाभिचारिकम्।
एतद्दोषस्य शान्त्यर्थं पौण्डरीके विशेषतः।।

ब्राह्मं च वैष्णवं चैव सूक्तं पौरुषमेव च।
सूक्तमेकाक्षरं चैव हुत्वा देवं प्रणम्य च।।

पश्चाद्विधिज्ञमाहूय विधिना सम्यगर्चयेत्।
सर्पं दृष्ट्वा नरो यावत् कम्पते च मुहुर्मुहुः।।

अमन्त्रमर्चकं दृष्ट्वा तथा भीतो जनार्दनः।
तस्मात् सर्वप्रयत्नेन विधिज्ञेनैव चार्चयेत्।।

## ९.४.३२ भगवदर्चने मन्त्रस्खलने प्रायश्चित्तम्

**खि.३५.३० - ३२**

मन्त्राणां स्खलने मूर्तिमन्त्रेण प्रणवादिना।
नमोऽन्तेनोपचारैस्तु पूजां कुर्यान्न दोषकृत्।।

अष्टाक्षरं महामन्त्रं जपेदष्टोत्तरं शतम्।
अपराधक्षमापणं च प्रार्थयेद् भक्तिभावितः।।

अष्टाक्षरस्य मन्त्रस्य ऋषिर्नारायणः स्मृतः।
छन्दश्च देवी गायत्री परमात्मा च देवता।।

**वि.६६.४१०**

मन्त्राणां स्खलने तन्मूर्त्या सप्रणवया कारयेत्।

**प्र.२७.१२२**

## ९.४.३३ उपचारद्रव्यालाभे प्रायश्चित्तम्

**खि.३५.२८, २९**

धूपदीपादिषु तथा अर्घ्यद्रव्यादिके तथा।
अलाभे संस्मरंस्तत्तद् द्रव्यं भक्तिसमन्वितः।।

कुसुमैर्वा तुलस्या वा मन्त्रेणोपचरेच्छनैः।
पुष्पालाभे जलेनैव मन्त्रपूर्वं समाचरेत्।।

## ९.४.३४ उपचारविपर्यासे प्रायश्चित्तम्

**स.७०.१२, १३**

नवभेदेष्वथैकस्मिन् कल्पितेऽप्यर्चने तथा।
आसनाद्युपचारेषु भिन्नं तद्विग्रहं प्रति।।

वैष्णवं विष्णुगायत्रीं जुहुयात्तदनुस्मरन्।
देवदेवं च भक्त्यैव ध्यायेद्विष्णुं सनातनम्।।

**वि.६६.४०९**

आसनादिसर्वोपचारविपर्यासे 'क्षमस्वे'ति देवं प्रणम्य पुनरर्चयेत्।

## ९.४.३५ मन्त्रासने उपचारविपर्यासे प्रायश्चित्तम्

**वा.४८**

उत्सवे स्नपने चैव वन्दने च प्रदक्षिणे।।
नित्यपूजाक्रमाद्यादि विपर्यासक्रमोच्यते (?)।
आसनावाहनं चैव पाद्यमर्घ्यं तथैव च।।

अनुमानं तथोपानस्वागतं तानि सप्त च।
अन्योन्यसङ्करे यत्र दोषं लाघवमुच्यते (?)।।

वैष्णवं विष्णुसूक्तं च जपित्वैवाचरेद्बुधः।
आस्थाने चोत्सवे चैव अर्चनस्नपनादिषु।।

दोषो यत्र समीक्ष्यैव तथा चैवेक्षणेऽर्चयेत्।
अन्यथा विपरीतं चद् विनश्यति न संशयः।।

तस्मात् सर्वप्रयत्नेन उक्तवत् सम्यगाचरेत्।
अन्यथा अर्चयित्वा तु दोषमत्रैव शान्तये।।

पौरुषं विष्णुसूक्तं च तत्तद्दैवं सुहूयताम्।

## ९.४.३६ नित्यार्चने स्नानासने उपचारविपर्यासे प्रायश्चित्तम् वा.४८

जिह्वाग्रशोधने चैव दन्तस्यैव च मार्जने।।

आदर्शनं त्रयं चैव क्रमस्यापि विपर्यये।
एवं दोषो लघुश्चैव श्रीसूक्तं तत्र संस्मरेत्।।

आचामं मुखवासं च केशं चात्र विकीर्य च।
प्लोतेनाच्छादनं चैव तैलमाचाममेव च।।

ताम्बूलकेशवष्टं च अङ्गोद्वर्तं च चामरम्।
हरिद्राकेशशोधं च आचामं प्लोतकं तथा।।

द्वादशे तु विपर्यासे दोषश्चात्र गुरुस्तथा।
वायव्यं वारुणं चैव सौमं सौरं च वैष्णवम्।।

एवं कृत्वा क्रमेणैव पुनः पूर्ववदाचरेत्।
उपवीतोत्तरीयं च अक्षतं गन्धमेव च।।

पवित्रं चेति पञ्चैते साङ्कर्यं चाभिचारिकम्।
दौर्गं सारस्वतयुतं पौरुषं च यजेत् क्रमात्।।

यथाक्रमं ततः कुर्यात् देवदेवं प्रणम्य च।
पुराणस्तोत्रशब्दैश्च वेदघोषणमेव च।।

पुष्पदाम्ना तु संवेष्ट्य विपर्यासं भवेद्यदि।
श्रीसूक्तं भूमिदैवत्यं सकृद्धुत्वा चरेद्बुधः।।

चूलिभ्यां शङ्खपद्मं च सहस्रं चैव धारया।
नीराजनं तथाऽऽचामं स्नानं चैव विपर्यये।।

एवं चैवाभिचारे तु शान्त्यर्थं चैव हूयते।
वैष्णवं विष्णुसूक्तं च जयादीनृषिदैवतम्।।

प्राजापत्यं पृथग्घुत्वा उक्तवत् कर्म चाचरेत्।
विपर्यासे तु षट्त्रिंशत् भोग स्नानासने बुधः।।

### ९.४.३७ नित्यार्चने स्नानासनोपचारलोपे प्रायश्चित्तम्

**वा.४७**

अलकानां शोधने हीने हीने तैलाङ्गमर्दने।
तथा धावनहीने च हीने जिह्वाग्रशोधने।।

मुखप्रक्षालने हीने हीने च मुखवासने।
गलाच्छादनहीने च द्रव्यशोधनहीनके।।

एतैस्तु विग्रहैर्हीने विष्णुगायत्रिया यजेत्।
------------------------------------।।

प्रत्येकं दशपर्यायं हुत्वा तच्छास्त्रपारगः।

### ९.४.३८ अलङ्कारासने उपचारविपर्यासे प्रायश्चित्तम्

**वा.४८**

अलङ्कारासने चैव विपर्यासक्रमं शृणु।
पादुकं चासनं चैव वस्त्रं प्लोतेन मार्जनम्।।

अलकान् कङ्कतं चैव पश्चाच्चैवात्र धूपितम्।
उपवीतोत्तरीयं च पवित्रं भूषणं ददेत्।।

विपर्यासाच्च दशभिः भवेच्चैवाभिचारिकम्।
तद्दोषशमनार्थाय नित्याग्निं च परिस्तरेत्।।

भूसूक्तं गारुडं चैव षाण्मुखं रौद्रसूक्तकम्।
श्रीसूक्तान्तं सकृद्धुत्वा उक्तवत् सर्वमाचरेत्।।

पुष्पं गन्धं तथा धूपं दीपदानमिति क्रमम्।
यथारुचि तथा कार्यं कारयेद्देशिकोत्तमः।।

अन्योन्यसङ्करे यत्र दोषस्तत्र न विद्यते।
केचिच्चैवाचरेद्विद्वान् विशेषं शृणुत द्विजाः।।

धूपं दीपं तु दत्त्वैव अर्चयित्वा समाहितः।
तथैव विपरीतं तु कारयेत् तदनुक्रमात्।।

अन्योन्यसङ्करं कुर्यात् दोषो नास्ति मनीषिणः।
आदर्शं चाञ्जनं चैव वस्त्रं चार्घ्यं तथैव च।।

दानं स्तोमेति षड्भिश्च विपर्यासस्य शान्तये।
भौतिकं मुनिमन्त्रं च यजित्वा सर्वमाचरेत्।।

सायंरक्षां तथा चैव वाहनाद्यादिदर्शनम्।
नृत्तं तु छत्रचामर्यं महाशब्दं च गेयकम्।।

एवं विपर्यये सप्त लघुदोषमिति स्मृतम्।
रौद्रं ब्राह्मं च भूसूक्तं वैष्णवं तत्र होमयेत्।।

यथाक्रमेण कर्तव्यमाचरेद्देशिकोत्तमः।

## ९.४.३९ भोज्यासने उपचारविपर्यासे प्रायश्चित्तम्

**वा.४८**

भोज्यासनोपचारं च विपर्यासक्रमं शृणु।।

आचामं पादपीठं च पादुकं च विपर्यये।
एवं चैवाभिचारस्य दोषमत्रैव (?) शान्तये।।

पौरुषं विष्णुसूक्तं च पर्यायाष्टशतं यजेत्।
स्तुत्वा देवं प्रणम्यैव पुनरेवोक्तवच्चरेत्।।

हविर्निवेदनात् पूर्वं मधुपर्कं तु दापयेत्।
विपर्यासद्वयं कुर्यात् महादोषो भवेद्बुधाः।।

अग्निमीलेऋचं हुत्वा विष्णुसूक्तं सवैष्णवम्।
ब्राह्मं रौद्रं च हुत्वा तु पुनः कर्मोक्तवच्चरेत्।।

हविर्निवेदनात् पूर्वं क्षीरं नैव निवेदयेत्।
यजुर्वेदादि जप्त्वैव वैष्णवं व्याहृतिं यजेत्।।

निवेदनाच्च पूर्वं तु सर्वभक्ष्यं निवेदयेत्।
निवेदनात् परे दत्त्वा अपक्वं सर्वदा चरेत्।।

ताभ्यामेव विपर्यासे सर्वसस्यविनाशनम्।
तद्दोषशमनार्थाय वैष्णवं गारुडं यजेत्।।

ईकारादि सकृद्धुत्वा उक्तवत् पुनराचरेत्।
निवेदने तु सर्वत्र मुखवासान्तमाचरेत्।।

विपर्यासेन सम्प्रोक्तं विशेषं चापरं शृणु।
मुखवासं निवेद्यादि तैलाक्तेन न कारयेत्।।

स्नानकाले तु सर्वत्र नग्नं नैवात्र कारयेत्।

### ९.४.४० उत्सवस्नपनबिम्बयोरभावे प्रायश्चित्तम्

**स.७६.६२**

स्नपने चोत्सवे हीने कूर्चं रुक्मं च तत्र वै।

न्यस्य भक्त्या समावाह्य ध्यायन् देवं समर्चयेत्।।

### ९.४.४१ नित्यार्चने उपचारलोपे प्रायश्चित्तम्

**वि.६६.४१०**

एतेष्वेकं हीनं चेत्, तत्तद्देवतामन्त्रं वैष्णवं च जप्त्वा पुनस्तदुपचारादि-सर्वोपचारैरर्चयेत्।

**प्र.२७.११६, ११७**

### ९.४.४२ नित्यार्चने आधावलोपे प्रायश्चित्तम्

**वा.४४**

आदाय (आधाव?) तोयहीने च गन्धहीने तथैव च।

वारुणं च जपेच्चैव गारुडं च तथा यजेत्।।

### ९.४.४३ नित्यार्चने स्वागतानुमाननलोपे प्रायश्चित्तम्

**वा.४४**

स्वागते चानुमाने द्वौ हीने शान्तस्य पूजने।।

विष्णुगायत्रिमुच्चार्य वैष्वक्सेनं यजेद्बुधः।

**खि.३५.६ - ८**

अर्चनाङ्गोपचारार्हद्रव्यालाभे तथैव च।

परिच्छदानामन्येषामभावे वाद्यहीनके।।

यद् द्रव्यं हीयते यो वा उपचारो विलुप्यते।
तद् द्रव्यदेवतामन्त्रं विष्णुसूक्तं सवैष्णवम्।।
नित्याग्नौ जुहुयात् पश्चात् पुण्याहमपि वाचयेत्।

**वा.४४**

सर्वद्रव्यैश्च हीने च लब्धमादाय चादरात्।।
वैष्णवं विष्णुसूक्तं च जपित्वा देशिकोत्तमः।

**वि.६६.४१०**

उक्तद्रव्यालाभे पुष्पं तोयमक्षतं वा गृहीत्वा तत्तद् द्रव्यं ध्यात्वाऽर्चयेत्।

### ९.४.४४ नित्यार्चने देवावाहनादिलोपादौ प्रायश्चित्तम्

**वा.४७**

प्रातरावाहने हीने हीने चोद्वासने तथा।।
नित्याग्निं च परिस्तीर्य जुहुयात् तत्र वैष्णवम्।
सौरं च गारुडं हुत्वा श्रीसूक्तं तु ततः परम्।।
एवं मन्त्रं सकृद्धुत्वा पुनरावाहनं चरेत्।

### ९.४.४५ नित्यार्चने देव्योरावाहनलोपे प्रायश्चित्तम्

**वा.४७**

हीने देव्योस्तथावाहे श्रीभूसूक्तं यजेद् बुधः।
देव्यौ च विधिनाऽवाह्य चार्चाहीने विशेषतः।।
नित्याग्निं साधयित्वा तु परिषिच्य च पावकम्।
श्रीसूक्तं भूमिदैवत्यं दौर्गं सारस्वतं तथा।।

होमे चाष्टादशैः प्रोक्तमष्टाविंशतिसङ्ख्याया।
यथाविधि तथावाह्य चार्चयेद्देशिकोत्तमः।।

### ९.४.४६ नित्यार्चने ध्यानलोपप्रायश्चित्तम्

**स.७०.११**

अर्चायां ध्यानहीने तु विष्णुसूक्तं यजेद् बुधः।।

ध्यात्वा सम्यक् तथा देवं पुनरर्चनमाचरेत्।

**क्रि.२४.२१, २२**

**वा.४७**

वर्जयेत् तोयसङ्ग्राह्यं प्रोक्षणं चोपलेपनम्।
उपदंशहविः पाकैर्धूपदीपादिना सह।।

नित्ययात्राभ्रमण्यादि शिष्येणैव कृतं भवेत्।
एवं शिष्यार्चकगुरोर्दिनं प्रति कृतं क्रमात्।।

एकाध्वर्येण कृत्वा तु अथवा कारयेद्द्विजः।
यथोक्तध्यानहीने च रूपे बिम्बस्य मानसे।।

वैष्णवं विष्णुसूक्तं च पुरुषसूक्तयुतं पुनः।
ध्रुवसूक्तं जपित्वैव तत्तत्सूक्तं सुहूयताम्।।

सौरं च सोमसूक्तं च अग्निसूक्तं यजेत् क्रमात्।
यथोक्तध्यानमाविश्य नित्यं विधिवदर्चयेत्।।

### ९.४.४७ नित्यार्चने मन्त्रासनोपचारलोपे प्रायश्चित्तम्

**वा.४७**

पूर्वं मन्त्रासने हीने हीने चेदौपचारिके।

पृथिव्यादीनि हुत्वा तु गारुडं च यजेत् क्रमात्।।
विष्णुगायत्रिमुच्चार्य हुत्वा तत्र सवैष्णवम्।
पश्चाच्चैवासनं कल्प्य भोगं तद्युक्तमाचरेत्।।

## ९.४.४८ नित्यार्चने पादुकासमर्पणलोप प्रायश्चित्तम्

**वा.४७**

पादयोः पादुके हीने हीने द्रव्याञ्जनादिके।
एतैस्तु विग्रहैर्हीने प्रत्येकं वैष्णवं यजेत्।।

## ९.४.४९ नित्यार्चने नीराजनलोपे प्रायश्चित्तम्

**वा.४७**

नीराजने तथा हीने रुद्रमन्त्रं सवैष्णवम्[1] ।

## ९.४.५० नित्यार्चने प्लोतेन मार्जनलोपे प्रायश्चित्तम्

**वा.४७**

प्लोतेन मार्जने हीने हीने चाभ्युक्षणे तथा।
ऐन्द्रमाग्नेयमन्त्रं च जपित्वात्र विशेषतः।।

## ९.४.५१ नित्यार्चने अलङ्करणलोपे प्रायश्चित्तम्

**वा.४७**

वस्त्रैराच्छादने हीने हीने पुष्पैरलङ्कृते।
भूषणे च तथा हीने हीने चैवोपवीतके।।

---

1. यजेदित्यध्याह्रियते।

एतैर्दोषस्य शान्त्यर्थं पौण्डरीके विशेषतः।
पद्मैर्वा बिल्वपत्रैर्वा घृताक्तेन जुहोति वै।।

वैष्णवं विष्णुसूक्तं च शतमष्टोत्तरं यजेत्।
यथोक्तमाचरेद्विद्वान् देवदेवमनुस्मरन्।।

### ९.४.५२ नित्यार्चने गन्धलेपनलोपे प्रायश्चित्तम्

**वा.४७**

गन्धैश्च लेपने हीने श्रीमन्त्रं च यजेत् पुनः।

### ९.४.५३ नित्यार्चनादौ घण्टावादनलोपे प्रायश्चित्तम्

**प्र.२७.३२९, ३३०**

अर्चनादिषु सर्वत्र यत्र घण्टानिनादनम्[1]।
एष[2] एव विधिः प्रोक्तः प्रायश्चित्तं समाचरेत्।।

### ९.४.५४ नित्यार्चने धूपदीपलोपे प्रायश्चित्तम्

**वा.४७**

धूपैर्दीपैस्तथा हीने हीने चार्घ्यप्रदर्शने।।
श्रीमन्त्रं रुद्रमन्त्रं च सौमं चात्र यजेत् क्रमात्।

---

1. हीनमित्यध्याह्रियते।

2. भेरीताडनलोपोक्तः।

### ९.४.५५ नित्यार्चने स्तोमारोपणलोपे प्रायश्चित्तम्

**वा.४७**

स्तोमान्यारोपणे हीने हीने न्यासस्य कर्मणि।।

वैष्णवं मुनिमन्त्रं च सकृद्धुत्वा प्रणम्य च।

### ९.४.५६ नित्यार्चने सन्ध्यारक्षणलोपे प्रायश्चित्तम्

**वा.४७**

सन्ध्यारक्षणहीने च हीने तद्वाहनादिके।।

चक्रमन्त्रं यजेच्चैव जयादीन् मन्त्रमुच्चरन्।

### ९.४.५७ नित्यार्चने छत्रपिञ्छादिलोपे प्रायश्चित्तम्

**वा.४७**

छत्रपिञ्छादि हीनं चेद् महाशब्दं च पञ्चकम्।

तद्दोषशमनार्थाय पृथिव्यादीन् यथाक्रमम्।।

जुहुयात् तत्र देवेशं क्षमस्वेति प्रणम्य च।

सतन्त्रिगलगानं च सुषिरं चर्मकांस्यजम्।।

एतत् पञ्चमहाशब्दमुदितं ब्रह्मणा पुरा।

### ९.४.५८ नित्यार्चने नृत्तगीतलोपे प्रायश्चित्तम्

**वा.४७**

नृत्तगीतं च तत्काले जयादेर्मन्त्रमुच्चरन्।

### ९.४.५९ नित्यार्चने प्रमुखमण्डपलोपादौ प्रायश्चित्तम्

**वा.४७**

प्रमुखे मण्डले हीने हीने चैवाप्यलङ्कृते।
हविःपात्रविहीने च तत्र स्यात् पृथ्विदैवतम्।।

तत्तन्मन्त्रं सुहोतव्यं पश्चान्मन्त्रं समाचरेत्।

### ९.४.६० नित्यार्चने सन्ध्यादीपलोपे प्रायश्चित्तम्

**क्रि.२४.८, ९**

सन्ध्यादीपविहीने तु श्रीदैवत्यं सवैष्णवम्।।

आग्नेयं च सकृद्धुत्वा दीपांश्च द्विगुणं ददेत्।

### ९.४.६१ नित्यार्चने अर्चनाकाले अजस्रदीपनिर्वाणे प्रायश्चित्तम्

**वि.६६.४१०**

अर्चनाकाले अजस्रदीपः मूषककृमिकीटपतङ्गशलभादिपतनेन, स्वयमेव, मरुता वा, विच्छिन्नश्चेत् द्विगुणं दीपं समुद्दीप्य सौरं रौद्रम् आग्नेयं वैष्णवं च हुत्वा पुनरर्चयेत्।

**प्र.२७.११८ - १२०**

[अत्र अजस्रदीपस्य कालान्तरे निर्वाणेऽपि उपर्युक्तं प्रायश्चित्तं विधीयते।]

**क्रि.२४.९**

अजस्रदीपविच्छेदे शतमष्टोत्तरं यजेत्।

### ९.४.६२ अर्चनान्यकाले अजस्रदीपविच्छेदप्रायश्चित्तम्

**वि.६६.४१०**

अर्चनाकालादन्यस्मिन् अजस्रदीपे विच्छिन्ने वैष्णवं विष्णुगायत्रीमाग्नेयं च हुत्वा द्विगुणमुद्दीपयेत्।

### ९.४.६३ अजस्रदीपनाशे प्रायश्चित्तम्

**खि.३५.३**

अजस्रदीपात् सर्वेषां दीपानां दीपनं भवेत्।
दीपनाशे तु जुहुयाद्वैष्णवं विष्णुसूक्तकम्।।

### ९.४.६४ नित्यार्चने सर्वदीपनाशे प्रायश्चित्तम्

**वि.६६.४१०**

तत्काले सर्वदीपा नश्यन्ति चेत्, महत्तरो दोषो भवति। देवं शुद्धोदकैः संस्नाप्य कुशोदकैश्चाभिषिच्य पूर्ववत् प्रायश्चित्तं शान्तिं च हुत्वा देवमभ्यर्च्य द्विगुणं हविर्निवेद्य आचार्याय दक्षिणां दद्यात्। दीपेषु बहुषु वर्तमानेषु एकं (को) नष्टं चे(ष्टश्चे)त् तन्न दोषाय भवति।

**प्र.२७.१२०, १२१**

### ९.४.६५ नित्यार्चने यवनिकालोपे प्रायश्चित्तम्

**वि.६६.४१०**

अर्चनाकाले पटे हीने प्राजापत्यं वैष्णवं च हुत्वा प्रच्छन्नपटं कृत्वाऽर्चयेत्।।

**प्र.२७.१२३**

**क्रि.२८.२६, २७**

द्वारं यवनिकाच्छन्नमकृत्वा पूजयेद्यदि।।

हुत्वा तद् द्वारदैवत्यं वैष्णवं व्याहृतीर्यजेत्।
देवदेवं च संस्नाप्य समभ्यर्च्य निवेदयेत्।।

**वा.४४**

अग्रे यवनिकाहीने विष्णुसूक्तं जपेद्बुधः।।

## ९.४.६६ नित्यार्चने वेददूषकादिदर्शने प्रायश्चित्तम्

**वि.६६.४१०**

वेददूषकपाषण्डपापरोगान्वितानां प्रतिलोमाद्यन्त्यजादीनां दर्शने वैष्णवं ब्राह्मं रौद्रम् आग्नेयं च व्याहृत्यन्तं हुत्वा अर्चयेत्।

**प्र.२७.१२४, १२५**

**वा.४४**

चण्डालं पतितं श्वानं दुःशीलं गुरुनिन्दकम्।।

कुष्ठापस्मारकादींश्च वर्जयेद्देवसंनिधौ।
अथवा चेद्विशेषेण ह्यस्मिन्नर्थे विशेषतः।।

भगवद्ध्यानहीनं च पाषण्डं गुरुनिन्दकम्।
दुःशीलं च दुराचारं कुष्ठापस्मारकादिषु।।

गोपुरस्य बहिर्नीत्वा पश्चात् सम्यक् समर्चयेत्।
प्रमादाद्दर्शने चैव तत्पूजा निष्फला भवेत्।।

तस्माद्यवनिकामग्रे विन्यसेद्देशिकोत्तमः।
अस्यार्थस्य विशेषेण कैश्चिच्चैव मतं श्रृणु।।

बिडालध्यानशीलं च मूकं चैवान्धकं तथा।
शववाहकपाषण्डप्रतिलोमं च निन्दकम्।।

वृत्तहीनं च षण्डं च अङ्गहीनाधिकाङ्गकम्।
प्रच्छन्नबौद्धसमयं वीक्षणं नैव कारयेत्।।

प्राकाराच्च बहिर्नीत्वा पुनरर्चनमारभेत्।

### ९.४.६७ निर्माल्यार्चनादौ प्रायश्चित्तम्

**स.७३.२१, २२**

निर्माल्यस्यार्चने वापि निवेदितनिवेदने।
तयोश्च सङ्करे तत्र पञ्चगव्यैः कुशोदकैः।।

शुद्धोदैरभिषिच्यैवमर्चयित्वा निवेदयेत्।

### ९.४.६८ स्नपने निर्माल्येन पुनरर्चने प्रायश्चित्तम्

**क्रि.२५.९० - ९२**

निर्माल्येनार्चने चापि निवेदितनिवेदने।।

संस्नाप्य शान्तिहोमान्ते समभ्यर्च्य निवेदयेत्।
प्रायश्चित्तं तथैवोक्तं तत्संस्पृष्टनिवेदने।।

एष एव विशेषः स्यात् अन्यत् सर्वं खिलोक्तवत्।

### ९.४.६९ नित्यार्चने नित्यहोमादिलोपे प्रायश्चित्तम्

**वा.४७**

नित्याग्निपूजने हीने हीने दर्भादिना तथा।
वैष्णवं विष्णुसूक्तं च पौरुषेण समन्वितम्।।

मिन्दाहुतिं यजेत् पश्चात् सर्वं पूर्ववदाचरेत्।

**वि.६६.४१३**

नित्यहोमे हीने वैष्णवं दशशो हुत्वा, यथोक्तहोमं द्विगुणं जुहुयात्।

**प्र.२७.१५९, १६०**

### ९.४.७० एककालादित्र्यहपर्यन्तं नित्यहोमलोपे प्रायश्चित्तम्

**खि.३५.३२ - ३५**

एककालं नित्यहोमे हीने द्विगुणमाचरेत्।।

त्र्यहे हीने मथित्वाऽग्निं विष्णुसूक्तं च वैष्णवम्।

हुत्वा पुरुषसूक्तं च मूर्तिमन्त्रैर्हुनेच्चरुम्।।

प्रायश्चित्तमिदं हुत्वा क्रमाद्धोमं समाचरेत्।

समिध्यरण्यां वाऽऽरोप्य जुहुयाद्वैष्णवं पुनः।।

ध्रुवपादसमारोपमग्नेरिच्छन्ति केचन।

### ९.४.७१ कपाले मूर्तिहोमदोषप्रायश्चित्तम्

**स.७०.१८, १९**

प्रमादान्मूर्तिहोमं च कपाले जुहुयाद्यदि।।

प्रायश्चित्तं यजेत्तत्र वैष्णवं व्याहृतीरपि।

**क्रि.२४.२८**

**नि.३६**

अन्यादि (ग्नि?) सङ्करे चैव कपाले जुहुयाद्धविः।

वैष्णवं विष्णुसूक्तं च व्याहृत्यन्तं सुहूयताम्।।

### ९.४.७२ नित्यार्चने मूर्तिहोमलोपे प्रायश्चित्तम्

**य.४६.१९, २०**

मूर्तिहोमविहीने तु मूर्तिमन्त्रं सवैष्णवम्।।

हुत्वान्ते द्विगुणं धीमान् पावकं च सुरक्षयेत्।

**नि.३६**

मुनि(मूर्ति?) होमे तदा हीने कालातीते विपर्यये।।

अन्येन सङ्करे चैव वैष्णवं विष्णुसूक्तकम्।

पुरुषसूक्तं च हुत्वा तु श्रीदैवत्यकं क्रमात्।।

ब्राह्मं रौद्रं च संयुक्तं वैष्णवं व्याहृतीर्यजेत्।

मन्त्रेण मुनये हुत्वा नैमित्तिकगुणां (?) चरेत्।।

### ९.४.७३ नित्यहोमे अग्न्यनुगत्यादि प्रायश्चित्तम्

**नि.३६**

नित्यहोमेऽग्निशालायाम् अग्नावनुगतेपि च।

'अयं ते योनि'मन्त्रेण समिध्यारोप्य भस्म तत्।।

मथितं लौकिकाग्निं वा तत्स्थाने संनिधापयेत्।

समिधं तां निदध्याच्च उज्ज्वाल्य परिषेचयेत्।।

मिन्दाहुती च विच्छिन्ने वैष्णवं व्याहृतीर्यजेत्।

एवमग्निं च संसाध्य होमं पूर्ववदाचरेत्।।

### ९.४.७४ नित्यार्चने हविर्लोपे प्रायश्चित्तम्

**स.७०.१४ - १६**

हविर्हीने तु तद् ग्रामे जनाः सर्वे तथैव च।

पीड्यन्ते क्षुत्पिपासाद्यैः यजमानो नृपस्तथा।।

तस्मात् प्रयत्नतो देवं हविः सम्यङ्निवेदयेत्।

हविर्हीने तदा ब्राह्मं प्राजापत्यं सवैष्णवम्।।

विष्णुसूक्तं यजित्वैव हविस्तद्वन्निवेदयेत्।

**स.२४.२४, २५**

हविर्निवेदने हीने ब्राह्मं हुत्वा ततः परम्।।

प्राजापत्यं ततो हुत्वा वैष्णवेन समन्वितम्।

विष्णुसूक्तं हविस्तद्वत् द्विगुणं च निवेदयेत्।।

**य.४६.१७ - १९**

हविर्निवेदने हीने श्रीभूसूक्तसमन्वितम्।।

वैष्णवं पौरुषं हुत्वा द्विगुणं च निवेदयेत्।

एवं संवर्धयेद्धीमान् षण्मासान्तं विशेषतः।।

षण्मासान्ते जनाः (मलाः ?)सर्वे नाशं यान्ति क्रमाद् ध्रुवम्।

**वा.४७**

हविर्निवेदने हीने हीने उत्तमविग्रहे।

नित्याग्निं च परिस्तीर्य जुहुयात् सर्वदैवतम्।।

वारुणं वैष्णवं हुत्वा हविः सम्यङ्निवेदयेत्।

-------------------------------------।।

-------------------------------------

देवीभ्यां च विहीने तु तत्तत्सूक्तं यजेद्बुधः।।

पुनरन्तः प्रविश्यैव देवीभ्यां च निवेदयेत्।

**वि.६६.४१२**

हविषि हीने तद्ग्रामवासिनः सर्वे जनाः क्षुत्पिपासादिभिः पीडिता भवेयुः। तस्मात् प्रयत्नतो देवस्य हविः सम्यङ् निवेदयेत्। एककाले हविषि हीने द्वितीये द्विगुणं तृतीये त्रिगुणं निवेदयेत्। एकाहे अतीते वैष्णवं श्रीभूमिदैवत्यं मूर्तिहोमं च हुत्वा देवं शुद्धोदकैः संस्नाप्य महाहविः प्रभूतं निवेदयेत्।

**प्र.२७.१३९ - १४२**

### ९.४.७५ नित्यार्चने पक्कहविर्लोपे प्रायश्चित्तम्

**खि.३५.२२, २३**

हीने हविषि पक्के तु आमं द्रव्यं निवेदयेत्।।
जुहुयाच्चरुणा चाग्रावधिदेवमनुं स्मरन्।

### ९.४.७६ एकपात्रसिद्धहविषः भागशो निवेदने प्रायश्चित्तम्

**खि.३५.२५ - २७**

सिद्धे हविष्येकपात्रे भागशो विनिवेदनम्।।
व्यवधानेन न भवेत् सर्वं स्याद्विनिवेदितम्।
(नालिकेरं च कूष्माण्डमेवमादिफलानि च।।
व्यञ्जनानि च पक्कानि भागशो न निवेदयेत्।
निवेदितेऽप्यल्पभागे शिष्टमुच्छिष्टतामियात्।।
प्रमादाद्यदि कुर्याच्चेच्छान्तिं कुर्याद्विधानतः।)
कलशैः स्नाप्य देवेशं शान्तिहोमं समाचरेत्।।
वैष्णवं श्रीमहीसूक्तं ब्राह्मं हुत्वा विशेषतः।
हविः संसाध्य यत्नेन प्रभूतं विनिवेदयेत्।।

### ९.४.७७ नित्यार्चने ग्रहणकालादौ पक्वहविर्निवेदने प्रायश्चित्तम्

**क्रि.२८.३३ - ३५**

पक्वं ग्रहणवेलायां ग्रहणात्पूर्वमेव वा।
हविर्निवेदयेन्नैव यदि मोहान्निवेदयेत्।।

पीड्यते तु जगत् सर्वमाधिव्याध्याद्युपद्रवैः।
वैष्णवं विष्णुसूक्तं च मन्त्रांश्च ग्रहदैवतान्।।

हुत्वा संस्नाप्य देवेशं समभ्यर्च्य निवेदयेत्।

### ९.४.७८ उपदंशादिहीनहविर्निवेदने प्रायश्चित्तम्

**स.७०.१६, १७**

उपदंशादिभिर्दध्ना हीने तत्तदनुक्रमात्।।

सौम्यं सामादिकं चापि यजुराद्यं सवैष्णवम्।
ऋग्यजुस्सामाथर्वाणां मन्त्राणां जपमाचरेत्।।

**क्रि.२४.२६, २७**

उपदंशेषु हीनेषु यजेत् सौम्यं सवैष्णवम्।
सामादिं च घृते हीने जुहुयाद्वैष्णवान्वितम्।।

जुहुयाद्दधिहीने तु यजुराद्यं सवैष्णवम्।

**खि.३५.२३ - २५**

हविषि व्यञ्जने हीने अपूपादिविवर्जिते।।

घृते विहीने पयसि दध्नि वा दोषसम्भवः।
तच्छान्त्यै वैष्णवं विष्णुसूक्तमग्नौ हुनेत्तथा।।

यथालाभं समाहृत्य देवाय विनिवेदयेत्।

**वा.४७**

भिन्ने भाण्डे च पतिते स्थाल्यां चैवोपदंशकम्।
एतैर्दोषयुते यत्र तत्र दोषो न लिप्यते।।

हविस्तत्र विहीने च उपदंशं तथैव च।
घृतस्रावणहीने च हीने दध्नस्तथैव च।।

गुड खण्डफले हीने मधुपर्कस्य हीनके।
ब्राह्मं च वैष्णवं चैव पुनः कर्म समाचरेत्।।

## ९.४.७९ अपक्वहविर्निवेदनादौ प्रायश्चित्तम्

**प्र.२७.१४२ - १४५**

सोपदंशमपक्वं च शीतं पर्युषितं तथा।।

पात्रान्तरेष्वनिक्षिप्तं सावशेषं च लङ्घितम्।
विवृतं स्रावितं चैव विकृतं दृष्टिदूषितम्।।

अप्रोक्षितमथास्पृष्टम् अगृहीतममुद्रितम्।
हविर्निवेदयेच्चेत्तु वैष्णवं श्रीमहीमनून्।।

आग्नेयं वारुणं चैव वायव्यं दशशो हुनेत्।
द्विगुणं तु पुनः कृत्वा प्रभूतं तु निवेदयेत्।।

**वि.६६.४१२**

सोपदंशं हविरपक्वं, शीतं, पर्युषितं, स्थालीशेषं, पात्रान्तरगतं, विवृतं, स्रावितं, लङ्घितं, विकृतं, अन्त्यजादिदृष्टं च देवेशाय निवेदयेच्चेत्, वैष्णवं, श्रीभूमिदैवत्यम्, आग्नेयं, वारुणं, वायव्यं च दशशो हुत्वा, पुनश्च हविर्निवेदयेत्।

**वा.४४**

उपदंशं हविस्तत्र पाकहीने विशेषतः।।

ब्राह्मं च विष्णुगायत्रीं यजित्वा विधिवत् पुनः।

**९.४.८० अन्यस्पृष्टहविर्निवेदने प्रायश्चित्तम्**

**क्रि.२४.७९ - ८८**

(अनुलोमैस्तु संस्पृष्टं हविर्यदि निवेदयेत्।
कलशैः स्नापयेद्देवं चत्वारिंशद्भिरष्टभिः।।

महाशान्तिं च हुत्वा तु प्रभूतं च निवेदयेत्।
देवेशं स्नापने काले पूजानैवेद्यकालयोः।।

प्रतिलोमाश्च पतिताः पाषण्डाः वेददूषकाः।
नास्तिका भिन्नमर्यादाः यदि पश्यन्ति मोहतः।।

हविर्वा यदि पश्यन्ति श्वकाकाद्याः प्रमादतः।
देवेशायानिवेद्यैव तद्धविः प्रक्षिपेज्जले।।

तद्धविर्न निवेद्यं स्यात् देवेशाय प्रयत्नतः।
हविरन्यत् सुसम्पाद्य देवेशाय निवेदयेत्।।

वैष्णवं विष्णुसूक्तं च महाव्याहृतिसंयुतम्।
चतुरावर्त्य हुत्वैव पक्वान्नेनैव होमयेत्।।)
कारयेत् तान्त्रिकस्पर्शे प्रतिलोमोक्तनिष्कृतिम्।।

अवेदमूलाः समयास्तान्त्रिका वेददूषकाः।
ब्राह्मणैः पाचकादन्यैः स्पृष्टं नैव हविर्ददेत्।।

यदि दद्यात्तु मोहेन वैष्णवं तु सकृद्यजेत्।
उच्छिष्टाशुचिभिर्विप्रैः क्षत्रियैर्विड्भिरेव वा।।

अन्ने निवेदिते स्पृष्टे शुद्धोदैरभिषेचयेत्।
वैष्णवं दशकृत्वश्च हुत्वान्यच्च निवेदयेत्।।

स्पृष्टमाशौचवद्विप्रैः शूद्रैर्वाऽथानुलोमजैः।
निवेदयेच्चेदज्ञानात् कलशैरधमाधमैः।।

स्नापयित्वा ततः शान्तिं हुत्वाऽभ्यर्च्य निवेदयेत्।
प्रतिलोमैस्तु संस्पृष्टं हविर्यदि निवेदयेत्।।

कलशैः स्नापयेद्देवं चत्वारिंशद्भिरष्टभिः।
महाशान्तिं च हुत्वा तु प्रभूतं च निवेदयेत्।।

देवेशं स्नानकाले वा पूजाकाले निवेदने।
प्रतिलोमाश्च पाषण्डाः पतिता वेददूषकाः।।

नास्तिका भिन्नमर्यादा यदि पश्यन्ति मोहतः।
हविर्वा यदि तैर्दृष्टं देवेशाय निवेदयेत्।।

देवेशं स्नापयित्वा तु शुद्धोदैस्तस्य शान्तये।
अभ्यर्च्य शान्तिहोमान्ते प्रभूतं च निवेदयेत्।।

**वि.६६.४१२**

अशुचिना स्पृष्टं हविर्निवेदयेच्चेत्, देवं संस्नाप्य वैष्णवं विष्णुगायत्रीं च त्रयस्त्रिंशत्कृत्वो हुत्वा, शान्तिहोमविधिना शान्तिं हुत्वा, देवं प्रोक्षणैः प्रोक्ष्य, पुण्याहं वाचयित्वा, द्विगुणमभ्यर्च्य, हविर्निवेदयेत्।

**प्र.२७.१४६, १४७**

**नि.३६**

हविष्पाकं विना चान्यत्स्पर्शनं चेन्न दोषकृत्।
एतेनैव समानीय मन्त्रवत् स्वकृतं बुधः।। (?)

पुनस्तत्स्पर्शनं चेत् तु द्विजस्यान्यत् समाचरेत्।
शूद्रैरेवानुलोमैर्वा अनुक्ते स्पर्शने सति।।

प्रोक्षयेत् कुशतोयेन पाकादन्यं समाहरेत्।
स्पर्शने सति संत्याज्यं पाषण्डैर्वेददूषकैः।।

**प्र.२८.१८, १९**

शूद्राद्यैरनुलोमैश्च स्पृष्टं दत्वा हविस्ततः।
पञ्चगव्यैश्च शुद्धोदैः देवं संस्नाप्य चादरात्।।

पुण्याहं कारयेत् पश्चात् द्विगुणं तु निवेदयेत्।

**वि.६९.४२९**

शूद्राद्यनुलोमस्पृष्टहविर्निवेदने देवं पञ्चगव्यैः शुद्धोदकैश्चाभिषिच्य पुण्याहं वाचयेत्।

**वि.६९.४३१**

आशौचिद्विजस्पृष्टहविर्निवेदने च एकाहं महाशान्तिं हुत्वा, शुद्धोदकैरभिषिच्य, पुण्याहं वाचयित्वा, पूर्ववदर्चयेत् ।

**प्र.२८.३४, ३५**

**स.७३.२२, २३**

अर्चकान्यद्विजैः स्पृष्टे शुद्धोदैरभिषेचयेत्।।
अन्यद्विजैश्च संस्पृष्टे पूर्ववद्धोममाचरेत्।

## ९.४.८१ शर्करादियुतहविर्निवेदने प्रायश्चित्तम्

**वि.६६.४१२**

शर्कराङ्गारव्रीहितुषादियुते हविषि निवेदिते, अष्टाक्षरेण, विष्णुगायत्र्या, वैष्णवैश्च संस्तूय, क्षमस्वेति प्रणम्य, याचेत।

**प्र.२७.१४८, १४९**

**वा.४७**

तुषकेशनखास्थीनि मक्षिकैरनुजन्तुकैः।।

शल्यलोष्ठतुषाङ्गारैः मत्स्याद्यादियुते पृथक्।
एतैर्दोषैस्तु दृश्येत देवेशं संनिवेदयेत्।।

तद्दोषशमनार्थाय पौण्डरीके विशेषतः।
ईंकारादीन् तथा हुत्वा जुहुयात् सर्वदैवतम्।।

वैष्णवं च ततो हुत्वा अष्टाशीतिं यजेद्बुधः।
शुद्धस्नानोक्तमार्गेण देवेशं पूजयेत् पुनः।।

ब्राह्मणान् भोजयेत् पश्चात् हविः सम्यङ्निवेदयेत्।

## ९.४.८२ नित्यार्चने मक्षिकादिसंयुक्तहविर्निवेदने प्रायश्चित्तम्

**वि.६६.४१२, ४१३**

मक्षिकापतङ्गमशकपिपीलिकाकृमिकीटकेशाद्यैः संयुक्ते हविषि निवेदिते, देवं शुद्धोदकैः संस्नाप्य, वैष्णवं विष्णुगायत्रीं श्रीभूमिदैवत्यं च अष्टोत्तरशतं हुत्वा द्विगुणं निवेदयेत्।

**प्र.२७.१५०, १५१**

[अत्र विष्णुगायत्रीम् इत्यस्य स्थाने विष्णुसूक्तमिति दृश्यते।]

**नि.३६**

एतै र्युक्तहविरादौ देवेशाय निवेदिते।।
शुद्धोदैरेव संस्नाप्य हविरन्यन्निवेदयेत्।

**य.४६.२२ - २४**

सोपदंशं हविः पक्वं प्रातरर्कोदयात् पुनः।।

निवेदितं तु सोष्णं चेत् तथैवास्तमयात् पुनः।
केशादिदुष्टे यन्मोहात् -------------------- ।।

विसृज्यान्यत् समादाय शान्तिं हुत्वा निवेदयेत्।

### ९.४.८३ मक्षिकादिसंयुक्तमहाहविर्निवेदनप्रकारः

**वि.६६.४१३**

महाहविष्येतैः संयुक्ते सति तत्र पुरुषाशनमात्रं व्यपोह्य, भस्मजलैः कुशेन आपोहिरण्यपवमानैः प्रोक्ष्य, तन्निवेदयेत्।

**प्र.२७.१५२, १५३**

### ९.४.८४ विगर्हितवस्तुनिवेदने प्रायश्चित्तम्

**ज्ञा.१०२.१९४**

लोकधर्मविगर्हितानां च निवेदने शान्तिं हुत्वा सप्तभिः कलशैः संस्नाप्य आचार्यः कृच्छ्रं चरतीति विज्ञायते।

### ९.४.८५ पूजामध्ये तीर्थादिदानादौ प्रायश्चित्तम्

**प्र.२७.१८८, १८९**

प्रवृत्तायां तु पूजायां हविर्दानान्तमेव च।।

तीर्थप्रसाददानं वा पादुकाग्रहणं तथा।
न शस्तमन्यथा कृत्वा शान्तिहोमं समाचरेत्।।

## ९.४.८६ दुष्टताम्बूलनिवेदने प्रायश्चित्तम्

**वि.६६.४१३**

ताम्बूलम् असंस्कृतं लेपकेशान्वितं जन्तुस्पृष्टं निवेदयेच्चेत्, वैष्णवं श्रीभूमिदैवत्यं च हुत्वा पुनः ताम्बूलं निवेदयेत्।

**प्र.२७.१५५, १५६**

[अत्र 'पुनस्ताबूलं निवेयेदि' त्यस्य स्थाने 'पूनः अन्यत् ताम्बूलं 'अन्यत् ताम्बूलं संस्कृत्यनिवेदयेदि'ति दृश्यते।]

**य.४६.२३, २४**

केशादिदुष्टे यन्मोहात् ताम्बूले च निवेदिते।।

विसृज्यान्यत् समादाय शान्तिं हुत्वा निवेदयेत्।

## ९.४.८७ नित्यार्चने मुखवासलोपे प्रायश्चित्तम्

**स.७०.१८**

मुखवासविहीने तु श्रीमन्त्रं वैष्णवं यजेत्।

**क्रि.२४.२७**

**वा.४७**

मुखवासविहीने तु श्रीमन्त्रं च सुहूयताम्।।

## ९.४.८८ नित्यार्चने अशुचिस्पृष्टद्रव्यसमर्पणप्रायश्चित्तम्

**क्रि.२४.८९ - ९५**

पूजनार्थं जले पुष्पे मन्त्रवत् संस्कृते पुनः।

स्पृष्टं चेद् ब्राह्मणादन्यैः तत् त्यक्त्वान्यत् समाहरेत्।।

अथवा प्रोक्षणैः प्रोक्ष्य पात्रान्तरनिवेशितम्।
पूर्ववन्मन्त्रसंस्कारं कृत्वा तेनैव पूजयेत्।।

उच्छिष्टाशुचिभिर्विप्रैः स्पृष्टं यदि तथैव च।
स्पृष्टमाशौचवद्विप्रैः त्यक्त्वान्यद् द्रव्यमाहरेत्।।

प्रतिलोमैश्च संस्पृष्टं दृष्टं चैव विसर्जयेत्।
शूद्रैरथाप्यशुचिभिः प्रतिलोमैरुदक्यया।।

स्पृष्टमाज्यं दधि क्षीरं मधु वा तोयमेव वा।
देवार्थं नैव गृह्णीयात् दृष्टं सूतिकया तथा।।

अज्ञानाद्देवदेवाय यदि तानि निवेदयेत्।
शुद्धोदैः स्नापयित्वा तु हुत्वा शान्तिं समर्चयेत्।।

त्याज्यं पुष्पं च संस्पृष्टमेवमन्यत् फलादिकम्।
न त्यजेद्यदि लोभेन शान्तिं हुत्वाभिषेचयेत्।।

**खि.३५.२१, २२**

अशुचिस्पर्शदुष्टैश्च द्रव्यैरर्चनसम्भवे।
जुहुयात् पौण्डरीकाग्नौ शतमष्टौ च वैष्णवम्।।

सप्तभिः कलशैः स्नाप्य प्रभूतं च निवेदयेत्।

## ९.४.८९ नित्यार्चने बलिभ्रमणलोपादौ प्रायश्चित्तम्

**वा.४७**

बलिभ्रमणहीने च बलिदानविहीनके।।

अशनिपातादिवातादौ शिष्याभावे तथैव च।

दुर्दिने मेघगर्जैश्च कलहादिसमुद्भवे।।

गारुडं विष्णुसूक्तं च वैष्वक्सेनं सवैष्णवम्।
आलयान्तर्गतान् देवान् हुत्वा तत्र समाचरेत्।।

निर्वापबलिकाले तु तूर्यघोषविहीनके।
तत्र देवान् समावाह्य द्वाराग्रे निक्षिपेद्बलिम्।
बलिभ्रमणं च कर्तव्यमिति शास्त्रस्य निश्चयः।।

युग्मप्रदक्षिणे भ्राम्ये अयुग्मं त्वाभिचारिकम्।
एवं प्रदक्षिणं युग्मं कारयेदिति केचन।।

एकावरणयुक्ते तु परीत्यैव त्रयं क्रमात्।

**ज्ञा.१०४.१९५.१९६**

बलिमुत्थाप्य विघ्नश्चेत् येन केनचित् ब्राह्मं सौम्यं सौरं गारुडं वैष्वक्सेनं हुत्वा पुनरारभेत्।

**नि.३६**

बलिमुत्थाप्य विघ्नश्चेद् ब्राह्मं सौरं च गारुडम्।
वैष्णवं व्याहृतीर्हुत्वा पुनरेव समाचरेत्।।

**वि.६६.४१५**

बल्युद्धरणकाले येन केनचिद्विघ्नश्चेत् सौरं सौम्यं वैष्णवं च हुत्वा पुनरारभेत।

**प्र.२७.१८१, १८२**

**स.७०.५५, ५६**

उद्धृते तु बलौ विघ्ने सौरं सौम्यसमन्वितम्।।
हुत्वा तु पूर्ववत् कर्म प्रारभेत यथाविधि।

**क्रि.२४.५९**

## ९.४.९० बलिभ्रमणे छत्रपिञ्छाद्यलाभे प्रायश्चित्तम्

**वि.६६.४१५**

देवस्य --------------------- छत्रपिञ्छादीनामलाभे वारुणं ------------ व्याहृत्यन्तं जुहुयात्।

**प्र.२७.१७१**

## ९.४.९१ बलिभ्रमणे चामराद्यलाभे प्रायश्चित्तम्

**वि.६६.४१५**

देवस्य --------- चामरादीनामलाभे वायव्यं ----------- व्याहृत्यन्तं जुहुयात्।

**प्र.२७.१७२**

## ९.४.९२ बलिभ्रमणे दीपालाभे प्रायश्चित्तम्

**वि.६६.४१५**

देवस्य -------------------------- दीपालाभे च आग्नेयं वैष्णवं च प्रत्येकं व्याहृत्यन्तं जुहुयात्।

**प्र.२७.१७२**

दीपालाभे पावकं च व्याहृत्यन्तं यजेत् त्रयम् ।।

## ९.४.९३ बलिभ्रमणे वाद्यादिलोपे प्रायश्चित्तम्

**क्रि.२४.६८, ६९**

बलिभ्रमणकाले तु वाद्यहीने तु पौरुषम्।
नृत्तगेयविहीने च विष्णुसूक्तं च वैष्णवम्।।

हुत्वा घण्टाध्वनियुतं बलिभ्रमणमाचरेत्।
जपन् वै शाकुनं सूक्तं स्वस्तिसूक्तसमन्वितम्।।

## ९.४.९४ बलिभ्रमणे बलिप्रमाणवैकल्य प्रायश्चित्तम्

**वि.६६.४१५**

प्रमाणहीने अन्नबलौ वैष्णवं प्राजापत्यं च जुहुयात्।

**प्र.२७.१८३**

**स.७०.५६, ५७**

यदि प्रमाणहीनेन बलिं कुर्यात् प्रमादतः।।

आज्येन वैष्णवं हुत्वा प्रत्येकं चैकविंशतिः।

**क्रि.२४.६०**

**ज्ञा.१०४.१९६**

बिम्बे प्रमाणहीने ------------- वैष्णवं जुहुयाच्छतम्।

## ९.४.९५ बलिभ्रमणे अन्नबल्यलाभे प्रायश्चित्तम्

**क्रि.२४.६५ - ६७**

कल्पितान्नबलौ काले त्वलब्धेऽन्नबलौ सति।।

कुर्यादर्घ्यबलिं वापि पूर्ववत् पुष्पमेव वा।
नित्याग्नौ दशकृत्वस्तु यजेत् सौरं च वैष्णवम्।।

आलयावरणाद्बाह्ये मुखे वामे प्रकल्पिते।
कल्पिते बलिपीठे च तच्च कुर्यात् प्रदक्षिणम्।।

## ९.४.९६ बलिभ्रमणे आवाहनलोपे प्रायश्चित्तम्

**वि.६६.४१५**

अन्नबलावावाहनं विना बलिभ्रमणे कृते वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, श्रीभूमिदैवत्यं हुत्वा, पश्चाद्विधिना बलिभ्रमणं कारयेत्।

**प्र.२७.१८४, १८५**

### ९.४.९७ बलिभ्रमणे बलेः पतनादौ प्रायश्चित्तम्

**वि.६६**

अन्नबलौ भूमौ पतिते भिन्ने जीर्णे च पूर्ववत् बलिमापाद्य, वैष्णवं, गारुडं, प्राजापत्यं च हुत्वा, प्रदक्षिणं कारयेत्।

**प्र.२७.१८०, १८१**

**स.७०.५७**

भिन्ने जीर्णे बलौ तत्र वैष्णवं जुहुयाच्छतम्।।

**ज्ञा.१०४, १९६ ; क्रि.२४.६०**

### ९.४.९८ बलिभ्रमणे बलिधारकपतने प्रायश्चित्तम्

**ज्ञा.१०४.१९६**

बलिधारकपतने गारुडं वारुणं वायव्यं बलिदैवत्यं व्याहृत्यन्तं हुत्वा कुर्यात्।

### ९.४.९९ बलिभ्रमणे बलेः स्त्रीशूद्रादिस्पर्शे प्रायश्चित्तम्

**नि.३६**

स्त्रीशूद्रानुलोमादिकाकादिस्पर्शने सति।।

तोये तद्बलिमुत्क्षिप्य सौरं ब्राह्मं च गारुडम्।

जुहुयात् सौम्यमाग्नेयं श्रीभौम्यं चैव वैष्णवम्।।

**ज्ञा.१०४.१९६**

स्त्रीशूद्रानुपेताशुचिपतितान्त्यजादिस्पर्शने च तदपहाय ब्राह्मं प्राजापत्यं सौम्यं सौरं गारुडं वैष्णवं हुत्वा आरभेत।

## ९.४.१०० बलिभ्रमणे बलेः अस्पृश्यस्पर्शादौ प्रायश्चित्तम्

**खि.३५.४५, ४६**

अस्पृश्यैः पतितैर्वाऽपि बलौ स्पृष्टे च दूषितैः।।

पूर्ववद्बलिमाहृत्य बलिमन्त्रसमन्वितम्।
वैष्णवं चैव जुहुयादिति पूर्वजशासनम्।।

**स.७०.५४, ५५**

तद्बलौ पतितैः स्पृष्टेऽप्यस्पृश्यैः श्रुतिदूषकैः।।

पूर्ववद्बलिमासाद्य बलिदेवं यजेत् पुनः।

**क्रि.२४.५८**

## ९.४.१०१ बलिभ्रमणे बलेः केशादिदूषणे प्रायश्चित्तम्

**ज्ञा.१०४.१९६**

केशकीटादिदूषिते अयोग्याशुच्यन्नकल्पिते तत् त्यक्त्वा बलिं सौरं सौम्यमाग्नेयं गारुडं वैष्णवमार्षमाज्येन व्याहृत्यन्तं हुत्वा आरभेत। एवमेव हविर्निवेदने चोक्तमिति विज्ञायते।

**नि.३६**

केशकीटादियुक्ते उच्छिष्टान्नादि कल्पिते।
त्यजित्वा बलिमापाद्य सौरं सौम्यं च गारुडम्।।

आग्नेयं विष्णुसूक्तं च वैष्णवं व्याहृतीर्यजेत्।

## ९.४.१०२ दूषितहविर्निवेदने प्रायश्चित्तम्

**वि.६६.४१६**

दोषदुष्टहविर्निवेदनप्रायश्चित्तं कारयेत्।

**प्र.२७.१८३**

## ९.४.१०३ बलिभ्रमणे प्रोक्तबलिपात्रालाभे प्रायश्चित्तम्

**ज्ञा.१०४.१९६**

उक्तलक्षणयुतपात्रालाभे हविःपात्रं सङ्गृह्य तद्रूपं ध्यात्वा तदधिदेवं वैष्णवं हुत्वा बलिमुद्धरेत्।

**प्र.२७.१८२ ; वि.६६. ४१४**

## ९.४.१०४ बलिभ्रमणे बलिपात्रप्रमाणहानौ प्रायश्चित्तम्

**स.७०.५८ - ६०**

पात्रं प्रमाणहीनं चेद्वैष्णवं जुहुयात्तथा।
हुत्वा तु पौरुषं सूक्तं विष्णुसूक्तमतः परम्।।

पारमात्मिकसंयुक्तमींकारादींश्च हूयते।
ब्राह्मं रौद्रसमायुक्तं सौरमाग्नेयसंयुतम्।।

पञ्चवारुणपर्यन्तं जयाद्यैश्च समायुतम्।
यद्देवादीनि चाज्येन तस्य शान्तिर्भविष्यति।।

**क्रि.२४.६० - ६२**

--------------- पात्रे तत्प्रमाणविवर्जिते।।
वैष्णवं पौरुषं सूक्तं विष्णुसूक्तमतः परम्।
पारमात्मिकमींकारान् सौम्यं रौद्रं तथैव च।।

सौरमाग्नेयसंयुक्तं पञ्चवारुणसंयुतम्।
जयाद्यैश्चैव कूष्माण्डैः जुहुयात् तस्य शान्तये।।

## ९.४.१०५ बलिभ्रमणे बल्यग्रखण्डनिवेदनलोपे प्रायश्चित्तम्

**प्र.२७.१८५ - १८७**

बल्यग्रखण्डे विधिना शान्ताय त्वनिवेदिते।।

वैष्णवं मूर्तिमन्त्रं च हुत्वैव दशशः क्रमात्।
निवेद्य विष्वक्सेनाय प्रदाय मुखवासनम्।।

पुनश्च बल्युद्धरणं विधिना कारयेत्ततः।

**वि.६६(वै.मु.सं)**

## ९.४.१०६ बलिभ्रमणकाले मरणे शान्तिः

**नि.३६**

मरणे सति विज्ञाते कारयेच्चेद्बलिं ददेत्।
नित्याग्नौ जुहुयाच्छान्तिं द्विजमन्त्रं च हूयते।।

पुण्याहं वाचयित्वा तु प्रोक्षयेत् पञ्चगव्यकैः।
पुनर्भूतबलिं दद्यात् ध्वजदेवं समर्चयेत्।।

तद्दिने नित्यपूजायामर्चनां चेन्न दोषकृत् (?)।

## ९.४.१०७ नित्यार्चने बलिदानलोपे प्रायश्चित्तम्

**प्र.२७.१८७, १८८**

अकृते बलिदाने तु प्राश्य पादोदकं हरेः।।

प्रसादं चापि सम्प्राश्य पुनर्द्विगुणमर्चयेत्।

**नि.३६**

बलिदानविपर्यासे कालातीते विहीनके।
तत्तद्दैवत्यकं शान्तिं तस्या (?) जुहुयात् क्रमात्।।

बलिदानं च विच्छिन्नं कृत्वा शेषं समाचरेत्।

### ९.४.१०८ एककालबलिलोपे प्रायश्चित्तम्

**वि.६६.४१४**

प्रातःकाले बलिभ्रमणहीने वैष्णवं, सौरं, सौम्यं, प्राजापत्यं च जुहुयात्।

प्रातर्बलौ हीने मध्याह्ने द्विगुणं ------------- कुर्यात्।

**स.७०.४२, ४३ ; क्रि.२४.४८ ; प्र.२७.१६७, १६८**

**खि.३५.३५, ३६**

प्रातस्सन्ध्याबलौ हीने सौरं सौम्यं हुनेत्ततः।।

मध्याह्ने द्विगुणं दद्यात् बलिं श्रद्धासमन्वितः।

एककाले बलौ हीने पाश्चात्ये द्विगुणं चरेत्।।

**नि.३६**

एककाले बलौ हीने सप्तभिः कलशैरपि।

भगवन्तं सुसंस्नाप्य सौरं ब्राह्मं च वैष्णवम्।।

नित्याग्नौ सूर्यदैवत्यं हुत्वा तद्बलिमाहरेत् (रभेत्)।

### ९.४.१०९ प्रातर्मध्याह्नयोः बलिलोपे प्रायश्चित्तम्

**वि.६६.४१४**

मध्याह्ने च हीने सायं त्रिगुणं कुर्यात्।

**स.७०.४३ ; क्रि.२४.४९ ; प्र.२७.१६९**

### ९.४.११० एकाहे बलिलोप प्रायश्चित्तम्

**वि.६६.४१४**

एकाहे हीने नित्याग्नौ चुल्यां वा अग्निं परिस्तीर्य, वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, दिग्दैवत्यं च हुत्वा, विधिना प्रदक्षिणं कारयेत्।

**प्र.२७.१६९, १७०**

**स.७०.४४ - ४६**

एकाहं बलिहीनं चेदग्नावौपासने तथा।
आघारं पूर्ववद्धुत्वा परिषिच्य च पावकम्।।

जुहुयाद्विष्णुसूक्तं च देवेशं मनसा स्मरन्।
वैष्णवानपि षण्मन्त्रान् पूर्वोक्तेन विधानतः।।

बलीनुत्थापयेत् पश्चाद्यावत्सङ्ख्यासमायुतान्।
एकाहे त्विदमुद्दिष्टम् --------------------।।

**क्रि.२४.४९ - ५१**

## ९.४.१११ सप्तरात्रपर्यन्तं बलिलोपे प्रायश्चित्तम्

**ज्ञा.१०४.१९६**

एककाले हीने सप्तभिः कलशैः भगवन्तं संस्नाप्य सौरं सौम्यं गारुडं वैष्णवमौपासनाग्नौ हुत्वा बलिमारभेत। द्विकाले द्विगुणमेवं सप्तरात्रं वर्धयेत्।

**नि.३६**

एकद्विकाले द्विगुणं त्रिकाले त्रिगुणं क्रमात्।।
सप्तरात्रावसानः स्यात् ------------------।

**खि.३५.३७ - ३९**

एकस्मिन् दिवसे हीने परेद्युः प्रातरेव हि।
कलशैः स्नाप्य देवेशं पूर्वोक्तं होममाचरेत्।।

एवं षड्दिनपर्यन्तं प्रायश्चित्तं समाचरेत्।
सप्तरात्रं बलौ हीने जलसम्प्रोक्षणं चरेत्।।

ब्राह्मणान् भोजयित्वा तु पुनर्बल्युत्सवं चरेत्।

### ९.४.११२ द्व्यहादिद्वादशाहपर्यन्तं बलिलोपे प्रायश्चित्तम्

**वि.६६.४१४**

द्व्यहे द्विगुणं, त्र्यहे त्रिगुणम् - एवं द्वादशाहान्तं वर्धयेत्।

**स.७०.४६, ४७ ; क्रि.२४.५१ ; प्र.२७.१७३**

**ज्ञा.१०४.१९६**

सप्तरात्रेऽतीते तदालयगतानां तत्तन्मन्त्रैः हुत्वा पुनः शान्तिं समारभेत्।

**नि.३६**

### ९.४.११३ द्वादशाहोपरि बलिलोपे प्रायश्चित्तम्

**ज्ञा.१०४.१९६**

द्वादशाहेऽतीते महाशान्तिं हुत्वा देवेशं संस्नाप्यारभेत।

**नि.३६**

एवं द्वादशाहेऽतीते महाशान्तिः सुहूयताम्।।
ब्राह्मणान् भोजयित्वा तु देवेशं स्नापयेद्बुधः।

### ९.४.११४ पक्षपर्यन्तं बलिलोपे प्रायश्चित्तम्

**खि.३५.३९, ४०**

पक्षहीने निष्कृतिं तु कुर्यादङ्कुरपूर्वकम्।।

स्नापयित्वा तु देवेशं कुम्भस्थापनपूर्वकम्।
वैष्णवं सर्वदैवत्यं हुत्वा सम्प्रोक्षणं चरेत्।।

### ९.४.११५ मासपर्यन्तं बलिलोपे प्रायश्चित्तम्

**वि.६६.४१५**

द्वादशाहेऽतीते अग्निमौपासनमादाय वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं,

श्रीभूमिदैवत्यं, ब्राह्मं, रौद्रं, दिग्दैवत्यं च हुत्वा, पूर्ववत् बलिभ्रमणं कारयेत्।

**प्र.२७.१७३ - १७५**

**स.७०.४७ - ५०**

अत ऊर्ध्वं यदि स्याच्चेत् पौण्डरीकं समाहरेत्।।

हुत्वा पुरुषसूक्तं च विष्णुसूक्तमतः परम्।
पारमात्मिकसंयुक्तमींकारादिसमायुतम्।।

सप्तभिः कलशैर्देवं स्नापयित्वा विधानतः।
महाहविर्निवेद्यैव बलिमुत्थापयेत् क्रमात्।।

एवमेव विधानेन यावत् त्रिंशद्दिनादधः।

**क्रि.२४.५१ - ५४**

### ९.४.११६ त्रिमासपर्यन्तं बलिलोपे प्रायश्चित्तम्

**खि.३५.४१, ४२**

त्रिमासहीने तु बलावङ्कुरार्पणपूर्वकम्।
महाशान्तिं त्रिरात्रं तु हुत्वा सम्प्रोक्षणं चरेत्।।

प्रायश्चित्तं च हुत्वा तु हीनाहस्सु बलिर्भवेत्।
यावांस्तावन्तमादाय भूतपीठे विनिक्षिपेत्।।

### ९.४.११७ वत्सरपर्यन्तं बलिलोपे प्रायश्चित्तम्

**वि.६६.४१५**

मासेऽतीते पौण्डरीकाग्निमाधाय, वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, पारमात्मिकमींकारादींस्तदालयगतपरिषद्दैवत्यं च हुत्वा, तथैव बलिभ्रमणं कारयेत्। द्विमासे द्विगुणं, त्रिमासे त्रिगुणम् - एवं संवत्सरान्तं वर्धयेत्।

**प्र.२७.१७५ - १७७**

**स.७०.५० - ५४**

मासातीतो यदि भवेत् प्राच्यामाहवनीयके।।

हुत्वा तु पौरुषं सूक्तं विष्णुसूक्तमतः परम्।
प्रत्येकं जुहुयाद्विद्वान् शतमष्टाधिकं यजेत्।।

प्रत्येकं सर्वदैवत्यं जुहुयाद्विधिपूर्वकम्।
शताष्टकलशैर्देवं स्नापयित्वा विधानतः।।

पञ्चविंशतिगा दत्त्वा देवमुद्दिश्य यत्नतः।
महाहविर्निवेद्यैव बलिमुत्थापयेत् क्रमात्।।

एवमेव विधानेन कुर्यादब्दं प्रति प्रति।

**क्रि.२४.५४ - ५७**

## ९.४.११८ संवत्सरोपरि बलिलोपे प्रायश्चित्तम्

**वि.६६.४१५**

संवत्सरे अतीते देवाभिमुखे, दक्षिणे वा, सभ्याग्निं संसाध्य, वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, श्रीभूमिदैवत्यं, सर्वदैवत्यं च जुहुयात्। आचार्यदक्षिणां दत्त्वा, बल्युद्धरणं कारयेत्।

**प्र.२७.१७७ - १७९**

**खि.३५.४३ - ४५**

वर्षेऽतीते बलौ हीने पूर्वोक्तेनैव मार्गतः।
पञ्चाहं स्यान्महाशान्तिः शताष्टकलशैः प्लवः।।

नष्टप्रमाणेनान्नेन प्रभूतं बलिमाहरेत्।
'क्षमस्वे'ति प्रणम्यैव देवेशं मनसा स्मरेत्।।

आचार्यदक्षिणां चैव दत्त्वा चोक्तां समापयेत्।

**९.४.११९ अर्चनाङ्गपदार्थदोषादिप्रायश्चित्तम्**

**प्र.२७.१५७ - १५९**

अर्चनाङ्गेषु चान्येषु पदार्थेष्वेवमेव हि।

दूषितेष्वथ हीनेषु तस्य तस्याधिदैवतम्।।

मन्त्रं सवैष्णवं हुत्वा पुनरन्यैः समर्चयेत्।

अलाभे चैव सर्वेषां पुष्पं तोयं प्रगृह्य च।।

सङ्कल्प्यैव प्रतिनिधिं तत्तत् स्मृत्वा समर्चयेत्।

**वि.६६.४१३**

**९.४.१२० अन्यदेवपूजासाधनैरर्चने प्रायश्चित्तम्**

**य.४७.७१, ७२**

अन्येषां क्रूरदेवानां यानच्छत्रादिचामरैः।

वस्त्राभरणपुष्पैर्वा देवेशं नैव चार्चयेत्।।

अर्चयेच्चेत् तदज्ञानाद्देवस्य स्नपनं चरेत्।

**९.४.१२१ नित्यार्चने विमानादिबिम्बाङ्गवैकल्ये शान्तिः**

**नि.८**

पूजायां वर्तमानायां वैकल्यादिसमुद्भवे।।

अङ्गहीने च हीने चावर्णस्फुटिते बिम्बके।

पावकादिसमुत्पन्ने तथा जीर्णे विमानके।।

एवमादिसमुत्पन्ने क्षिप्तं शान्तिं च कारयेत्।

प्रमुखे चाग्निकोणे वा संचारार्थं विहाय वै।।

यस्यां दिश्यानने बेरे तत्स्थानाद्दक्षिणके दिशि।
समीपे बाह्यके वापि बालस्थानं प्रकल्पयेत्।।

पूर्वोक्तविधिना पीठे मध्ये चैव विशेषतः।
वास्तुहोमं च हुत्वा तु पर्यग्निं चैव कारयेत्।।

प्रमुखे दक्षिणे वापिर्म होमं प्रकल्पयेत्।
आघारं च ततः कृत्वा पूर्वोक्तेन विधानतः।।

घृतप्लुतैः बिल्वपत्रैः पद्मैर्वा पारमात्मिकम्।
जुहुयाद्विष्णुसूक्तं च पौरुषं सूक्तमेव च।।

मूर्तिमन्त्रैस्त्रिरावर्त्य शतमष्टोत्तरं यजेत्।
तस्माद्विम्बे ततः शक्तिध्यानं सम्यक् समाचरेत्।।

**९.४.१२२ प्रथमतः पूजकेतरैः तीर्थादिस्वीकारे प्रायश्चित्तम्**

**प्र.२७.१९०, १९१**

पूजान्ते पूजकात् पूर्वमन्यस्तीर्थादिकं पिबेत्।
प्रसादं वापि गृह्णीयात् तत्पूजा निष्फला भवेत्।।

महाशान्तिं तथा हुत्वा पुनः पूजां समाचरेत्।

**९.४.१२३ उक्तकाले द्वारबन्धनाकरणे प्रायश्चित्तम्**

**क्रि.२८.२९ - ३१**

उक्तकाले तु सम्पूर्णे कुर्याद्वै द्वारबन्धनम्।।

न कुर्याद्यदि मोहेन सन्ध्यान्ते द्वारबन्धनम्।
उद्घाटने तदाऽकाले तस्य दोषस्य शान्तये।।

वैष्णवं पौरुषं सूक्तं विष्णुसूक्तं तथैव च।
तत्तत्सन्ध्याधिदैवत्यं हुत्वा कुर्याच्च बन्धनम्।।

### ९.४.१२४ नित्यार्चने बुद्धिकृतलोपे प्रायश्चित्तम्

**वा.४७**

शतादिदोषयुक्तेन बुद्धिपूर्वं कृते तथा।
राष्ट्रक्षोभभयोत्पन्ने मृगचोरादिबाधके।।

एतैर्दोषयुते यत्र प्रतिष्ठां पुनराचरेत्।
प्रतिष्ठायाः परं नास्ति प्रायश्चित्तं द्विजोत्तमाः।।

### ९.४.१२५ नित्यार्चन नित्योत्सववत् प्रायश्चित्ताचरणम्

**य.४६.२४, २५**

नित्योत्सवविधानेन प्रायश्चित्तं मया पुरा।।

निरुक्ते विस्तृतं विश्वमाचरेन्मतिमांस्तथा।

### ९.४.१२६ नित्यार्चने बलिप्रदक्षिणन्यूनतातिरेकप्रायश्चित्तम्

**वि.६६.४१४**

प्रदक्षिणे हीने अधिके च वैष्णवं, गारुडं, च हुत्वा, बलिभ्रमणं कारयेत्।

**प्र.२७.१६७, १६८**

**नि.३६**

सकृत् प्रदक्षिणे हीने शान्तिं हुत्वा समारभेत्।
प्रदक्षिणस्य चाधिक्ये सौरं शान्तिं सुहूयताम्।।

### ९.४.१२७ नित्यार्चने ज्ञाताज्ञातदोषसामान्यप्रायश्चित्तम्

**क्रि.३१. १ - ७**

अतः परं प्रवक्ष्यामि सर्वसामान्यनिष्कृतिम्।

अशक्यं विधिवत् कर्तुं ब्रह्माद्यैरपि पूजनम्।।

किं वा तत्र मनुष्याणाम् अव्यवस्थितचेतसाम्।
विषयासक्तचित्तानाम् इन्द्रियाहृतचेतसाम्।।

अज्ञातानां च दोषाणाम् अर्चनादिषु कर्मसु।
ज्ञात्वा चानादृतानां च मोहाल्लोभात् प्रमादतः।।

तत्तद्दोषोपशान्त्यर्थं कुर्यात्सामान्यनिष्कृतिम्।
तत्तत्सन्ध्यावसाने च विष्णुसूक्तेन वैष्णवैः।।

सूक्तेन पौरुषेणापि विष्णुगायत्रिया तथा।
द्वादशाष्टाक्षराभ्यां च 'नमो ब्रह्मण' इत्यपि।।

पुष्पाणि पादयोर्दत्वा 'क्षमस्वे' ति प्रसादयेत्।
रात्रिपूजावसाने तु सूक्तेनैकाक्षरादिना।।

नारायणानुवाकेन स्तुत्वा पुष्पाञ्जलिं ददेत्।

## ९.४.१२८ मासान्ते सर्वदोषप्रायश्चित्तम्

**क्रि.३१.७ - १७**

मासावसाने कुर्याच्चेत् द्वादश्यां श्रवणे तथा।।

तस्मात्तु दिवसात् पूर्वम् अङ्कुरार्पणमाचरेत्।
देवेशं पूर्वरात्रौ तु समभ्यर्च्य विशेषतः।।

हविर्निवेदयित्वा तु बद्ध्वा प्रतिसरं तथा।
शाययित्वाथ देवेशं प्रातः स्नात्वा यथाविधि।।

प्रातः सन्ध्यावसाने तु कृत्वा ग्रामप्रदक्षिणम्।

स्थापयित्वा तु देवेशं ततः स्नपनमण्डपे।।

स्नापयित्वा तु कलशैः चत्वारिंशद्भिरष्टभिः।
पङ्कजं शालिभिः कुर्यात् साष्टपर्णं सकर्णिकम्।।

तस्मिन् देवं समारोप्य पूजयेदासनादिभिः।
महाहविः प्रभूतं वा यथाशक्ति निवेदयेत्।।

पानीयाचमनं दत्त्वा मुखवासं निवेदयेत्।
तत्काले चैव मूर्त्यर्चां पूर्ववत् कारयेद् बुधः।।

परिषिच्य च नित्याग्निम् 'अतो देवादि'वैष्णवैः।
पौरुषेण च सूक्तेन तथा विष्णोर्नुकादिना।।

जयादिभिश्च कूष्माण्डैः परिषन्मूर्तिभिस्तथा।
आज्येन साज्यचरुणा व्याहृत्यन्तं ततो यजेत्।।

द्वादशाष्टाक्षराभ्यां च शतमष्टोत्तरं यजेत्।
पूर्वोक्तैरेव मन्त्रैस्तु दत्त्वा पुष्पाञ्जलिं तथा।।

जीवस्थाने प्रतिष्ठाप्य 'क्षमस्वे'ति प्रणम्य च।
दद्यादाचार्यपूर्वेभ्यो दक्षिणां देवसन्निधौ।।

### ९.४.१२९ संवत्सरान्ते सर्वदोषप्रायश्चित्ताचरणम्
### वि.७९.४७६.४७७

मार्गशीर्षमासे शुक्लद्वादश्यां तद्दिनात् पूर्वम् अङ्कुरानर्पयित्वा, आलयाभिमुखे दक्षिणे वा पौण्डरीकाग्निं साधयित्वा, पूर्वेद्युः नित्यार्चनावसाने तस्मिन् वैष्णवं विष्णुसूक्तं पुरुषसूक्तं हुत्वा, विष्णुगायत्र्या अब्जशतं बिल्वपत्रं वा घृताक्तमग्नौ जुहुयात्।

देवेशं ध्यायन् पारमात्मिकमीङ्कारादीन् हुत्वा, अभ्यन्तरं प्रविश्य, देवं प्रणम्य, आनीय, अग्नेरुत्तरस्यां देवेशं चतुर्दशकलशैर्विधिनाऽभिषिच्य, नववस्त्रोत्तरीयाद्यैरलङ्कृत्य, अभ्यर्च्य, अग्नेः प्रतीच्यां धान्यवेद्युपरि पूर्ववत् पञ्चशयनानि आस्तीर्य, तथैव प्रतिसरं बद्ध्वा, देवेशं शाययित्वा, प्रागादिचतुर्दिक्षु चतुर्वेदाध्ययनं कृत्वा, पश्चादब्जाग्निं प्रज्वाल्य, पूर्ववद्धौत्रं प्रशंस्य, आवाहनं जुष्टाकारं स्वाहाकारं च कृत्वा, वैष्णवं श्रीभूमिदैवत्यं ब्राह्मं रौद्रं मुनिभ्यां मन्त्रं धात्रादिसर्वदैवत्यं च हुत्वा, विष्णुसूक्तेन पयोदधिघृतलाजैर्युक्तम् उपजुह्वा हुत्वा, अग्निमानम्य, नृत्तैर्गीतैश्च रात्रिशेषं यापयेत्।

आचार्यः प्रभाते स्नात्वा, अगारं(आगारं) प्रविश्य, देवमुत्थाप्य, पाद्यमाचमनं दत्वा, अग्निं विसृज्य, स्नानश्वभ्रे देवं प्रतिष्ठाप्य, अष्टोत्तरशतकलशैः संस्नाप्य, शुद्धोदकैरभिषिच्य, आस्थाने विष्टरे देवं संस्थाप्य, नववस्त्रोत्तरीयाद्यैरलङ्कृत्य, अभ्यर्च्य, विष्णुसूक्तेन बहुशः पुष्पाञ्जलिं दत्त्वा, देवेशाय निवेदयेत्। सौवर्णं यज्ञसूत्रम् आचार्यश्च उत्तराभिमुखो भूत्वा 'अग्निं दूते'ति मन्त्रेण सन्दध्यात्। देवं प्रार्थयेत्।

'न शक्यं विधिवत् कर्तुं ब्रह्माद्यैरपि पूजनम्।<br>
न्यूनातिरिक्तव्याघातदोषहीनं जगत्पते' इति स्तुत्वा,<br>
'अज्ञानानामशक्तानाम् अस्माकमदृढात्मनाम्।<br>
तस्मान्नित्यार्चनायां हि यदुद्भूतमशोभनम्।।<br>
पूजया त्वनया विष्णो प्रशान्तं सर्वमस्तु नः।

इति नत्वा, दण्डवत् प्रणामं कृत्वा, यथाभागोपदंशैर्युक्तं पायसकृसरगौल्यं यावकं शुद्धान्नं प्रभूतं निवेद्य, पानीयाचमनं दत्त्वा कर्पूराद्यैर्मुखवासं ताम्बूलं

च दत्त्वा, देवमालयं प्रदक्षिणीकृत्य, अर्चास्थाने संस्थाप्य, अर्चयित्वा, वैष्णवान् सम्पूज्य, ब्राह्मणभोजनं कृत्वा, आचार्यादिभ्यो दक्षिणां दद्यात्। एवं संवत्सरं प्रति समाचरेत्। तस्य (ते) संवत्सरनित्यार्चनाफलं लभेरन्निति विज्ञायते।।

**क्रि.३१.१८, १९**

संवत्सरे तु यन्न्यूनं नित्ये नैमित्तेकेऽर्चने।
तत्सर्वदोषशान्त्यर्थं मार्गशीर्षे तु मासि वै।।

द्वादश्यां शुक्लपक्षे तु कुर्यात्पूर्वोक्तमर्चनम् ।
संवत्सराप्तदोषाणां शान्तये चाथवौजसे।।

**खि.३५.४८ - ६२**

अज्ञातदोषशान्त्यर्थं प्रायश्चित्तमिहोच्यते।।

अयने चोत्तरे चैव शुक्लपक्षे विशेषतः।
विष्णुपञ्चदिने वापि परिगृह्य दिनं शुभम्।।

तस्मात्तु दिवसात् पूर्वं नवमे वाथ सप्तमे।
पञ्चमेऽहनि वा कुर्याद्विधिना चाङ्कुरार्पणम्।।
पूर्वेद्युरेव शर्वर्यां रात्रिपूजावसानके।
बद्ध्वा प्रतिसरं देवं शयने शाययेद् बुधः।।

प्रभाते देवमुत्थाप्य भूषयित्वा यथोचितम्।
ग्रामं प्रदक्षिणं नीत्वा सर्वालङ्कारसंयुतम्।।
जुहुयात् पौण्डरीकाग्नौ बिल्वपत्रैः घृताप्लुतैः।।

श्वेतपद्मदलैर्वापि महाशान्तिं विधानवित्।
शताष्टकलशैर्देवं स्नापयेच्च ततः क्रमात्।।

स्नपनान्ते समभ्यर्च्य नित्यपूजाक्रमेण वै।
आस्थाने स्थाप्य देवेशमलङ्कृत्य यथोचितम्।।

समर्पयित्वा वस्त्राणि माल्यानि विविधानि च।
सौवर्णं यज्ञसूत्रं च भक्तियुक्तं समर्पयेत्।।

प्रार्थयेच्च ततो देवं मन्त्रमेतं समुच्चरन्।
'अशक्यं विधिवत् कर्तुं ब्रह्माद्यैरपि पूजनम्।।

न्यूनातिरेकव्याघातदोषहीनं जगत्पते।
किमल्पज्ञैरशक्तैश्च मादृग्भिरदृढात्मभिः।।

तस्मान्नित्यार्चनायां तु सञ्जातं यदशोभनम्।
कृतया पूजया शक्त्या सम्पूर्णं सर्वमस्तु नः।।'

इत्युक्त्वा तु नमस्कृत्य प्रभूतं च निवेदयेत्।
आचार्यं पूजयेद् भक्त्या वस्त्राभरणकुण्डलैः।।

अन्नाद्यैस्तोषयेद्विप्रान् पूजयेद्वैष्णवांस्तथा।
अज्ञातदोषप्रायश्चित्तमिदं सर्वशान्तिदम्।।

एवं यः कुरुते भक्त्या विष्णोरमिततेजसः।
संवत्सरार्चनफलं सर्वं स समवाप्नुयात्।।

यत्रैषा क्रियते पूजा प्रतिसंवत्सरं हरेः।
न तत्र देशे पीडा स्यादनावृष्ट्याद्युपद्रवैः।।

### ९.४.१३० नित्यार्चनान्ते अपराधक्षमायाचनम्

**क्रि.२६.४२ - ५९**

क्षमामन्त्रं प्रवक्ष्यामि शृणुध्वं मुनिसत्तमाः।

अज्ञानादर्थलोभाद्वा रागद्वेषात्प्रमादतः।।

अपराधः कृतो यस्तं क्षमस्व पुरुषोत्तम।
मया वा मज्जनैर्वाथ मम बन्धुभिरेव वा।।

अपराधः कृतो यस्तं क्षमस्व पुरुषोत्तम।
आचार्येणार्चकेनापि भक्तैर्वा परिचारकैः।।

अपराधः कृतो यस्तं क्षमस्व पुरुषोत्तम।
राज्ञा वा राजभृत्यैर्वा तदमात्यैरथापि वा।।

अपराधः कृतो यस्तं क्षमस्व पुरुषोत्तम।
ग्रामणीभिर्ग्रामिभिर्वा ग्रामपालैरथापि वा।।

अपराधः कृतो यस्तं क्षमस्व पुरुषोत्तम।
गायकैर्नर्तकैर्वापि तथा वादित्रवादकैः।।
अपराधः कृतो यस्तं क्षमस्व पुरुषोत्तम।

---

अमन्त्रकार्चनायां यत् जातमज्ञातजन्मनः।।

अवद्यं मम यत् किञ्चित् क्षमस्व पुरुषोत्तम।
प्रणामादि विसर्गान्तं क्रियासु विधिपूर्वकम्।।

अपराधः कृतो यस्तं क्षमस्व पुरुषोत्तम।
अर्पितं तु यथाशक्ति पत्रं पुष्पं फलं जलम्।।

निवेदितं च नैवेद्यं स्वीकुरु त्वं जनार्दन।
आवाहनं न जानामि न जानामि विसर्जनम्।।

कर्मणा मनसा वाचा त्वत्तो नान्या गतिर्मम।
अन्तश्चरसि भूतानां द्रष्टा त्वं जगदीश्वरः।।

नाथ योनिसहस्रेषु येषु येषु व्रजाम्यहम्।
तेषु तेष्वच्युता भक्तिः अच्युतेऽस्तु सदा त्वयि।।

देवो दाता च भोक्ता च देवः सर्वमिदं जगत्।
देवो जयति सर्वत्र त्वं देवः स्वयमेव हि।।

अशक्यं विधिवत् कर्तुं ब्रह्माद्यैरपि पूजनम्।
न्यूनातिरेकव्याघातदोषहीनं जगत्पते।।

किमुतास्माभिरल्पज्ञैर्मनुष्यैरदृढात्मभिः।
तस्मान्नित्यार्चनायां तु यदुद्भूतमशोभनम्।।

अनया पूजया विष्णो प्रशान्तं सर्वमस्तु नः।
उपचारापदेशेन कृतानहरहर्मया।।

अपचारानिमान् सर्वान् क्षमस्व पुरुषोत्तम।
एवं नित्यार्चनान्ते तु प्रार्थयेत् सर्वनिष्कृतिः।।

पूजाभागं न जानामि त्वं गतिः पुरुषोत्तम।

**९.४.१३१ शान्तिहोमः पूजालोपादिनिमित्तकः**

**क्रि.२६.५९ - ६१**

इति संस्तुत्य नुत्यन्ते यागशालां प्रविश्य च।।

पौण्डरीकाग्निमासाद्य घृतेन जुहुयात् क्रमात्।
वैष्णवं विष्णुसूक्तं च पौरुषं सूक्तमेव च।।

जुहुयाद् विष्णुगायत्रीं शतमष्टोत्तरं तदा।
ईङ्कारादींश्च जुहुयात् वास्तुहोमं च कारयेत्।।

### ९.४.१३२ नित्यार्चनादौ अनियमप्रायश्चित्तार्थः विष्णुयागः

**ज्ञा.१०२.१९३, १९४**

सर्वत्रारभेत अनियमेषु विष्णुयागम्। अत्रैवार्षिकं बीजमजं ब्रह्मवादिनो वदन्ति। तस्मात् शालिपिष्टमयं किष्कायतमृत्विगुच्छ्रयमङ्गोपाङ्गयुतं पशुं कृत्वा, अग्नेः दक्षिणतः संस्थाप्यालङ्कृत्य, रात्रिसूक्तेनाभिमृश्य, 'प्रजापते न त्वदि'ति दक्षिणे कर्णे, वामे 'त्वघोरचक्षु' रित्युपांशुनैव जप्त्वा, 'चत्वारि शृङ्गे' त्युदरमभिमृश्य, ब्राह्ममासनमास्थाय, स्रुवजुह्वादीन् 'सञ्चत्वे जग्मु'रिति प्रोक्षयति। अध्वर्युर्वदति 'होतरेही'ति। अत्रैव 'अध्वर्यो देवता' इति 'ओं नमः प्रवक्त्र' इति होता होत्रक्रमेणैव स्थापनाधिपानामावाहनक्रमेण जुष्टाकारस्वाहाकारौ कृत्वा अध्वर्युः 'ब्रह्मन्, वयमिदं त्वया सृष्टस्य जगतः सर्वशान्तिदं देवयजनं करिष्याम' इति ब्रह्माणं वदति। 'होतरेही'त्यत्रैवाध्वर्युः। 'अध्वर्योदेवता' इत्यारभ्य होता 'हिं भूर्भुवः सुवरो'मित्यन्ते 'जगद्रक्षणार्थं देवयजनं कुरुष्वे'ति ब्रह्माणं वदति। पश्चात् पशुम् अभिमन्त्र्य, 'सहस्रशीर्षा पुरुषः, पुरुष एवे'ति शृङ्गौ, 'एतावान्, त्रिपादूर्ध्व'इत्यक्षिणी, 'तस्माद्विराट्, यत्पुरुषेण' इति शीर्षं, 'सप्तास्यासन्, तं यज्ञ'मिति कर्णं, 'तस्माद्यज्ञात्, तस्माद्यज्ञादि'त्युदरं, 'तस्मादश्वा' इति पुच्छं, 'यत् पुरुषं व्यदधु'रिति वृषणौ 'ब्राह्मणोस्ये'ति लिङ्गं, 'चन्द्रमा मनस' इति नाभिं, नाभ्या 'आसीदि'ति पूर्वपादौ, 'वेदाहमेतं, धाता पुरस्तात्, यज्ञेन यज्ञ'मित्यपरपादौ च क्रमेण छित्वा जुहोति। पश्चात् महाशान्तिं व्याहृत्यन्तं हुत्वा आशीर्भिराघोष्य, अध्वर्युप्रभृतीनां पृथक् पृथक् दक्षिणां दद्यात्। स एष विष्णुयागः।

### ९.४.१३३ नित्यार्चने प्रातः सन्ध्याद्यर्चनलोप प्रायश्चित्तम्

**स.७०.१९, २०**

प्रातस्सन्ध्यार्चने हीने मध्याह्ने द्विगुणं भवेत्।।

वैष्णवं पौरुषं सूक्तं विष्णुसूक्तं यजेत्ततः।
प्रातर्मध्याह्नयोर्हीने सायं तत् त्रिगुणं भवेत्।।

**क्रि.२४.३१, ३२**

**ज्ञा.१०२.१९३**

अथैककालार्चने हीने अग्निं समाधाय वैष्णवं भूमिदैवत्यं हुत्वा द्विगुणमर्चयेत्। द्विकाले तद् द्विगुणम्। त्रिकाले त्रिगुणम्।

**नि.३३**

अथ नित्यार्चनार्थं च प्रायश्चित्तं ब्रवीम्यहम्।
प्रातः सन्ध्यार्चनाहीने नित्याग्निं परिषिच्य च।।
शान्तिं हुत्वा तु संस्नाप्य कलशैः सप्तभिर्हरिम्।
ब्राह्मणान् भोजयेदेवं द्वितीये द्विगुणं भवेत्।।
तृतीये त्रिगुणं चैव ---------------------।

**खि.३५.८, ९**

प्रातः सन्ध्यार्चने हीने मध्याह्ने द्विगुणं चरेत्।।
प्रातर्मध्याह्नयोर्हीने सायं तु त्रिगुणं चरेत्।

**य.४६.९ ; वा.४७**

**वि.६६.४११**

एककालमर्चने हीने द्वितीये द्विगुणं तृतीये त्रिगुणं कुर्यात्।

**प्र.२७.१२८, १२९**

## ९.४.१३४ नित्यार्चने एकाहादिद्वादशाहपर्यन्तमर्चनलोपे प्रायश्चित्तम्

**स.७०.२१ - २४**

एकाहे त्वर्चनाहीने प्रायश्चित्तं विधीयते।
त्रिकालार्चा प्रकृत्वैव हवींष्यपि निवेदयेत्।।

दक्षिणाग्निं समादाय आघारं विधिवद्यजेत्।
प्रणम्य देवमाज्येन वैष्णवैः पञ्चविंशतिम्।।

हुत्वा पुरुषसूक्तेन विष्णुसूक्तेन वै यजेत्।
ब्राह्मणान् भोजयेत् पश्चाद्ददेत् पश्चाच्च दक्षिणाम्।।

एकाहे त्विदमुद्दिष्टं द्व्यहे तु द्विगुणं भवेत्।
एवं तद् द्वादशाहं च वर्धयेच्च दिने दिने।।

**क्रि.२४.३२ - ३५**

[अत्र आघारहोमो न विधीयते।]

**वि.६६.४११**

एकाहमर्चने हीने वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, श्रीभूमिदैवत्यं च हुत्वा, द्व्यहे द्विगुणं, त्र्यहे त्रिगुणम् एवं द्वादशाहान्तं वर्धयेत्।

**प्र.२७.१२९, १३०**

**य.४६.१०**

द्व्यहे तु द्विगुणं पश्चात् त्र्यहे तु त्रिगुणं बुधः।
एवं तद् द्वादशाहान्तं वर्धयेच्छान्तिसंयुतम्।।

## ९.४.१३५ नित्यार्चने एकाहादिपक्षपर्यन्तमर्चनलोपे प्रायश्चित्तम्

**खि.३५.९ - १५**

एकाहमर्चने हीने पूजकोऽनशनं चरेत्।।

उपावृत्तस्तु पापेभ्यः वसत्यात्मगुणैरिति।
उपवासस्त्वनशनं सर्वभोगविवर्जितम्।।

सप्तभिः कलशैः स्नाप्य हवींषि च निवेदयेत्।
एकाहस्येदमुदितं द्व्यहे च द्विगुणं चरेत्।।

स्नपनं शान्तिहोमं च कुर्यादब्जाग्निकुण्डके।
त्र्यहे च त्रिगुणं कुर्यादाचार्यः सुसमाहितः।।

त्रिरात्रादधिके चैव दक्षिणाग्नौ विशेषतः।
आघारं विधिवत् कृत्वा वैष्णवं पाञ्चभौतिकम्।।

ईंकारादीन् विष्णुसूक्तं वैष्णवं जुहुयाद् बुधः।
कलशैः स्नापयेद्देवं यथावित्तानुसारतः।।

पक्षहीने तु द्विगुणं प्रायश्चित्तं समाचरेत्।

**वा.४७**

दिनस्यैकस्य हीने तु तस्य दोषस्य शान्तये।
अब्जाग्निं साधयित्वा तु जुहुयात् सर्वदैवतम्।।

अष्टाशीतिं यजेत् पश्चात् नित्यं विधिवदर्चयेत्।
एकाहे च द्व्यहे हीने त्र्यहे वर्धयेदर्चनम्।।

पूर्वोक्तेन विधानेन प्रायश्चित्तं यजेत् क्रमात्।

## ९.४.१३६ नित्यार्चने एकाहादिमासपर्यन्तमर्चनलोपे प्रायश्चित्तम्

**ज्ञा.१०२.१९३**

एकाहमर्चने हीने अग्निं परिस्तीर्य शान्तिं हुत्वा सप्तभिः कलशैः संस्नाप्य ब्राह्मणान् भोजयेत्। द्वितीये द्विगुणं तृतीये त्रिगुणम्। एवं मासान्तं वर्धयति।

**नि.३३.३**

## ९.४.१३७ नित्यार्चने द्वादशाहादिमासपर्यन्तमर्चनलोपे प्रायश्चित्तम्

**स.७०.२५ - २८**

द्वादशाहे व्यतीते तु निधायाग्निं[1] तथैव च।
आघारं विधिवद्धुत्वा वैष्णवं च शतं यजेत्।।

तथा पुरुषसूक्तं च विष्णुसूक्तं शतं यजेत्।
चत्वारिंशद्भिरष्टाभिः कलशैः स्नापयेद्विभुम्।।

प्रणम्य देवदेवं तमर्चयित्वा यथाविधि।
महाहविः प्रभूतं वा भक्त्या सम्यङ्निवेदयेत्।।

आचार्याय पशून् दत्वा शक्त्या विप्रांश्च भोजयेत्।

**क्रि.२४.३५ - ३७**

[अत्र आघारहोमो न विधीयते।]

**प्र.२७.१३१, १३२**

अतीते द्वादशाहे तु सन्धायौपासनानले।
वैष्णवं विष्णुसूक्तं च पुरुषसूक्तं तथैव च।।

आलये परिषद्देवमन्त्रान् हुत्वा च शक्तितः।
कलशैः स्नाप्य देवेशम् अभ्यर्च्य हविरर्पयेत्।।

**वि.६६.४११**

द्वादशाहे अतीते, औपासनाग्निमाधाय, वैष्णवं, विष्णुसूक्तं तदालयगत-परिषद्देवतामन्त्रं च हुत्वा, वित्तानुसारेण देवं कलशैः संस्नाप्याभ्यर्च्य हविर्निवेदयेत्।

---

1. दक्षिणाग्निम्।

**य.४६.११ - १३**

अतीते द्वादशाहे तु सभ्याग्नौ च विशेषतः।
वैष्णवं विष्णुसूक्तं च श्रीभूसूक्तसमन्वितम्।।

हुत्वा च पार्षदैः सार्धं स्नापयेत् स्नपनोक्तवत्।
ध्रुवबेरं समभ्यर्च्य 'शं नो देवी' ति मन्त्रतः।।

देवान् सर्वान् समभ्यर्च्य हविः सम्यङ् निवेदयेत्।

**वा.४७.**

मासं पक्षं तथा चैव वर्धयेदर्चनं क्रमात्।।

**९.४.१३८ नित्यार्चने मासादूर्ध्वं संवत्सरपर्यन्तमर्चनलोपे प्रायश्चित्तम्**

**स.७०.२८ - ३६**

मासहीनं यदि भवेत् प्रायश्चित्तं सुहूयते।।
प्राच्यामाहवनीयं च दक्षिणाग्निं च दक्षिणे।
गार्हपत्यं प्रतीच्यां तु आवसथ्यं तथोत्तरे।।

पूर्वोक्तेन क्रमेणैव कुण्डं कृत्वा सलक्षणम्।
आघारं पूर्ववत् कृत्वा परिषिच्य च पावकम्।।

प्राच्यां पुरुषसूक्तं च विष्णुसूक्तं च दक्षिणे।
वैष्णवं गार्हपत्याग्नौ मूर्तिहोमं तथोत्तरे।।

देवेशं मनसा ध्यात्वा प्रत्येकं चैकविंशतिः।
देवीभ्यां च मुनिभ्यां च वैघ्नं गारुडसंयुतम्।।

तत्तद्धोमे सुहोतव्यं महाव्याहृतिसंयुतम्।
शताष्टकलशैर्देवं स्नापयित्वा विधानतः।।

पुण्याहं वाचयित्वा पश्चाद्विप्रान् सुपूजयेत्।
गणयित्वाथवा यावत्कालं शून्यगतं भवेत्।।

तावच्चैवार्चनाद्रव्यं देवेशस्य निवेदयेत्।
एवं मासे प्रकुर्वीत द्विमासे द्विगुणं भवेत्।।

एवं तद्वर्धयित्वा तु यावत् संवत्सरान्तकम्।

**क्रि.२४.३८ - ४३**

**वि.६६.४११**

मासं हीनं चेत्, आलयाभिमुखे सभ्याग्निमाधाय वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, श्रीभूमिदैवत्यं, सर्वदेवत्यं च हुत्वा, देवम् अष्टचत्वारिंशत्कलशैः संस्नाप्याभ्यर्च्य हविर्निवेदयेत्। एवं मासे प्रकुर्वीत। द्वितीये द्विगुणं तृतीये त्रिगुणम् एवं संवत्सरान्तं वर्धयेत्।

**प्र.२७.१३३ - १३५**

**नि.३३**

मासातीते तथा वास्तुशुद्धिं पुण्याहमाचरेत्।।

नित्याग्नीन् स्थापयित्वा तु दिग्दैवत्यं सवैष्णवम्।
श्रीभूमिदैवतं हुत्वा पौण्डरीके घृताप्लुतम्।।

शताब्जं बिल्वपत्रं वा गायत्रीं वैष्णवीं यजेत्।
कलशाष्टशतैर्देवं संस्नाप्यैव विधानतः।।

हौत्रशंसनमारभ्य भोजयेच्छतविप्रकान्।
एवं द्वितीये द्विगुणं तृतीये त्रिगुणं भवेत्।।

अब्दान्तमेवं संवर्ध्य कारयेदिति शासनम्।

**ज्ञा.१०२**

मासेऽतीते वास्तुशुद्धिं कृत्वा पञ्चाग्नीन् परिस्तीर्य दिग्दैवत्यं हुत्वा अब्जाग्नौ

वास्तुहोमं हुत्वा अष्टशतैः कलशैः भगवन्तं संस्नाप्य हौत्रं प्रशंस्य विप्रशतं भोजयेत्। द्वितीये द्विगुणं तृतीये त्रिगुणम्। एवं संवत्सरान्तं वर्धयति।

**खि.३५.१५ - १८**

मासेऽतीते तु पद्माग्नौ गायत्रीं वैष्णवीं हुनेत्।।

अष्टोत्तरशतञ्चाज्यसिक्तपद्मैर्हुनेत्ततः।
ईकाराद्यैः कापिलेन घृतेन जुहुयात्ततः।।
तिलतण्डुलमिश्रेण चरुणा जुहुयात्ततः।
अष्टाशीतिं च जुहुयाच्छेषं पूर्ववदाचरेत्।।

एतेनैव विधानेन यावत्संवत्सरावधि।
गुरुलाघवमालोच्य प्रायश्चित्तं समाचरेत्।।

**य.४६.१३ - १६**

मासहीनं यदि भवेद्धाम्नश्चाग्रे सलक्षणम्।।

सभ्याग्निं च समादाय सप्ताहं शान्तिमाचरेत्।
शताष्टकलशैर्देवं संस्नाप्याभ्यर्च्य मन्त्रवित्।।

प्रभूतं च निवेद्यैव ब्रह्मक्षमस्वेत्यभिवादयेत्।
एवं मासे प्रकुर्वीत द्विमासे द्विगुणं तथा।।

त्रिमासे त्रिगुणं प्रोक्तं वर्धयेद्वत्सरान्तकम्।

## ९.४.१३९ नित्यार्चने संवत्सरादूर्ध्वम् अर्चनलोपे प्रायश्चित्तम्

**स.७०.३६ - ४१**

तथा संवत्सरेऽतीते साहस्रैरष्टसंयुतैः।।

देवं शताष्टकैर्वाथ कलशैः स्नापयेद् बुधः।

तदर्धं(र्थं) देवमुद्दिश्य दानं सम्यक् समाचरेत्।।

सुवर्णदानं गोदानं भूमिदानं च शक्तितः।
दत्त्वैवाचार्यपूर्वेभ्यो वेदविद्भ्यः स्वशक्तितः।।
अब्जाग्निं साधयित्वा तु महाशान्तिः सुहूयताम्।
पद्मान् सहस्रं संहृत्य कपिलाघृतसंयुतम्।।

प्रत्येकं जुहुयात्तत्र गायत्रीं वैष्णवीं वदन्।
पूर्वोक्तेन विधानेन प्रतिष्ठां पुनराचरेत्।।

एवं देवार्चने हीने प्रायश्चित्तं विधीयते।
अन्येषामपि देवानामिदं सामान्यमुच्यते।।

**क्रि.२४.४३ - ४७**

**वि.६६.४११**

संवत्सरे अतीते पद्माग्नौ सप्ताहं महाशान्तिं हुत्वा वैष्णवान् सम्पूज्य ब्राह्मणभोजनं च कृत्वा देवं शताष्टकलशैः संस्नाप्य पुनः प्रतिष्ठां कारयेत्। पुनः प्रतिष्ठायामक्ष्युन्मेषाधिवासौ हित्वा अन्यत् सर्वं पूर्ववदाचरेत्।

**प्र.२७.१३६ - १३८**

**खि.३५.१९, २०**

संवत्सरेऽप्यतीते तु पूजाहीने प्रमादतः।
महाशान्त्युक्तमार्गेण मासमेकं समाचरेत्।।

ब्राह्मणान् भोजयित्वा च पुनः स्थापनमाचरेत्।
आचार्यदक्षिणां दद्याद्यथोक्तं तं समर्चयेत्।।

**य.४६.१६, १७**

पुनः प्रतिष्ठामब्दान्ते प्रतिष्ठोक्तविधानतः।।

अक्ष्युन्मेषाधिवासौ द्वौ हित्वा सर्वं समाचरेत्।

**ज्ञा.१०२.१९३**

संवत्सरेऽतीते स्थापनं सम्यगाचरेत्।

**नि.३३**

**९.४.१४० नित्यार्चने संवत्सरादिद्वादशवत्सरपर्यन्तमर्चनलोपे प्रायश्चित्तम्**

**नि.३३**

तस्मिन्नतीते भगवान् न रमेद् द्वादशाब्दके।
पिशाचप्रेतरक्षांसि वसन्तीति न संशयः।।

---

पलालभारमुत्सृज्य गोगणाय निवेदयेत्।।

द्वादशाहं दशाहं वा सप्ताहं वाथ पञ्च वा।
ब्राह्मणान् भोजयित्वा तु नवीकृत्यालयं हरेः।।

वास्तुहोमं ततो हुत्वा पर्यग्निं कारयेद्बुधः।
प्रासादमध्ये चाब्जाग्नौ पद्महोमं सुहूयताम्।।

तत्राज्य लाजपिष्टेन कृत्वाङ्गोपाङ्गसंयुतम्।
किष्कायतद्विभागोच्चं पशुं कृत्वा विधानतः।।

अग्नेर्दक्षिणतः स्थाप्य रात्रिसूक्तेन मन्त्रतः।
खुरादीन् वस्त्रहेमाद्यैः अलङ्कृत्याभिमृश्य च।।

जप्त्वा वै दक्षिणे कर्णे वामे चैव यथाक्रमम्।
'प्रजापते न त्वदे'ति 'अघोरचक्षु'रिति ब्रुवन्।।
'चत्वारि शृङ्गा'द्युदरमभिमृश्याह काश्यपः।
'ध्रुवादिशा' प्रोक्ष्य चाध्वर्युः 'सञ्चत्वे'ति च मन्त्रतः।।

अध्वर्यो होतरेहीति तथाध्वर्यो देवतेति च।
नमः प्रवक्त्रेति होता प्राङ्मुखक्रममाचरेत्।।

आवाहनं जुष्टाकारं स्वाहाकारं करोति वै।
ब्रह्मणमेवमध्वर्युर्होतरेहीति च ब्रुवन्।।

शान्तिं यजन् देवयजनं करिष्यामि इतीरयेत्।
अहमनुमतो भूत्वा अध्वर्युर्याजमानकम्।।

कुरुष्वेति वदन् ब्रह्मा पश्चात् तं पशुमाप्य च।
'सहस्रशीर्षे'ति कर्णे 'वेदाहं' शृङ्गके तथा।।

'पादोस्य' इति चोक्त्वा तु 'तस्माद्विराड्' तं पदम्।
'यत्पुरुषेण' मन्त्रेण 'सप्तास्यासन्नि'ति क्रमात्।।

'तं यज्ञ'मिति कर्णेन तस्माद्यज्ञेन कुक्षि च।
'तस्माद्यज्ञे'ति पुच्छं च क्रमादङ्गमतः परम्।।

'यत्पुरुषं व्यदधुश्चैव कथिते वृषणं तथा।'
'ब्राह्मणोऽस्य मुखं' चेति 'चन्द्रमा' इति नाभिकीम्।।

'नाभ्या आसीद्वेदाह'मिति पादौ ततः परम्।
'धाता पुरुस्ताद्यज्ञेन यज्ञ'मिति पादके।।

एकैकाङ्गानि तस्याग्नौ छित्त्वा छित्त्वा क्रमेण वै।
देवेशं मनसा ध्यायन् यजेत् सर्वस्य शान्तये।।

व्याहृत्यन्तं महाशान्तिं हुत्वा पुण्याहमाचरेत्।
होतुश्च होमकर्तॄणां दक्षिणां च ददेत् पुनः।।

शूलस्थापनमार्गादि पश्चात् सम्यक् समाचरेत्।
लोकेशऋषिधान्याश्च चतुष्काले निवेदयेत्।।

महाशान्तिं सुहोतव्यं सप्तभिः कलशैरपि।
स्नाप्य देवेशमभ्यर्च्य हविः सम्यङ्निवेदयेत्।।

### ९.४.१४१ नित्यार्चने द्वादशाब्दोपरि अर्चनलोपे प्रायश्चित्तम्

**ज्ञा.१०२.१९३**

द्वादशाब्दातिक्रमे भगवान् न रमेत। तत्र पिशाचब्रह्मराक्षसादयो वसन्ति। तस्मात् तस्मिन् यदीच्छेत् चेद्देवेशं स्थापयितुं सुवर्णहलेन कर्षणादीन् मन्त्रेण कृत्वा अगारे पलालभारमुत्सृज्य गोगणाय निवेद्य त्रयोदशाहं सप्ताहं पञ्चाहं त्र्यहं वा विप्रान् भोजयित्वा आगारं नवीकृत्य शुभर्क्षे वास्तुशुद्धिं कृत्वा मध्ये अब्जाग्नौ अब्जहोमं कुर्यात्।

### ९.४.१४२ नित्यार्चने अज्ञानकृतलोपे प्रायश्चित्तम्

**वा.४७**

अज्ञानकृतपूजायां हीनं तत्र विशेषतः।
उक्तप्रकारं चालोच्य तत्तत् सर्वं समाचरेत्।।

### ९.४.१४३ आलयावरणाद् बाह्ये मनुष्यमृतौ अर्चनाक्रमः

**वि.६६.४११**

आवरणाद् बाह्ये पञ्चाशद्दण्डाभ्यन्तरे मनुष्याणां मृतिर्भवति चेत् शवोद्धरणात् पूर्वं देवेशस्यार्चनं हविर्निवेदनं न कारयेत्। ध्रुवकौतुकयोः पुष्पन्यासमेव कारयेत्। पश्चात् कालातीते शान्तिं हुत्वा द्विगुणमर्चयेत्।

**प्र.२७.१२६ - १२८**

**क्रि.२४.७० - ७३**

पञ्चाशच्चापसीमान्ते चैकवीथ्यां शवे सति।
अर्चनं च हविर्दानं देवदेवस्य वर्जयेत्।।
यदि कुर्यात् तदज्ञानात् शुद्धोदैरभिषिच्य च।

यद्देवाद्यैश्च हुत्वा तु समभ्यर्च्य निवेदयेत्।।

षष्टिसप्तत्यशीत्यर्वाक् क्षत्रियादिशवे सति।
अनुलोमशवे कुर्याच्छान्तिं शूद्रस्य चोक्तवत्।।

अन्यवास्तुगते पूजा न दोषाय भवेच्छवे।

**९.४.१४४ ग्रामीणमरणोत्तरं शवसंस्कारात् पूर्वं च भगवदर्चने प्रायश्चित्तम्**
**वा.४८**

वर्तमानार्चनग्रामे मरणं चात्र सम्भवेत्।।

यावत्प्रेतं बहिर्नीतं तावत्कालं न चार्चयेत्।
अज्ञानादर्चनं कुर्यान्महादोषो भवेद्बुधाः।।

ब्राह्मं च वैष्णवं हुत्वा विधिना सम्यगर्चयेत्।
अथवा चेद्विशेषेण श्रौतवत् कर्म चाचरेत्।।

अन्तः शवं भवेद्यत्र चण्डालस्येतरस्य वा।
वेदं चात्र विना ध्यायेत् तत्र कार्यं त्यजेत च।।

तथैवाङ्गालये विष्णोरर्चनं नैव कारयेत्।
कुटिकं पत्तनं चैव खर्वटं राजधानिकम्।।

यथाक्रमार्चनं कुर्यात् उक्तदोषो न विद्यते।
भुक्तिमुक्तिप्रदत्त्वाच्च सूत्रोक्तविधिनार्चयेत्।।

न वास्त्वङ्गालये ग्रामे तथा चैव समाचरेत्।

**९.४.१४५ प्रायश्चित्ताचरणे प्रशस्तकालानपेक्षा**
**क्रि.३२.९८**

प्रायश्चित्तक्रियायां तु कालापेक्षा न विद्यते।
तस्मात्सर्वप्रयत्नेन निष्कृतिं शीघ्रमाचरेत्।।

### ९.४.१४६ गृहार्चायां प्रातःपूजालोपे प्रायश्चित्तम्

**क्रि.३२.८७**

अतः परं प्रवक्ष्यामि गृहार्चादोषनिष्कृतिम्।
प्रातः कालार्चने हीने सायं द्विगुणमाचरेत्।।

### ९.४.१४७ गृहार्चायां द्वादशदिनादर्वाक् पूजालोपे प्रायश्चित्तम्

**क्रि.३२.८८, ८९**

सायं हीने तथा प्रातराद्वादशदिनावधि।
एवमेव क्रमेणैव वर्धयेद् द्विगुणं सुधीः।।
समभ्यर्च्य निवेद्यैव ब्राह्मणानपि भोजयेत्।

### ९.४.१४८ गृहार्चायां द्वादशदिनपूजालोपे प्रायश्चित्तम्

**क्रि.३२.८९, ९०**

द्वादशाहार्चने हीने सूक्तैः पौरुषवैष्णवैः।।
हुत्वा पूर्ववदभ्यर्च्य द्विगुणं च निवेदयेत्।

### ९.४.१४९ गृहार्चायां मासादूर्ध्वं पूजालोपे प्रायश्चित्तम्

**क्रि.३२.९०, ९१**

मासहीनं यदि भवेत् मूलहोमसमन्वितम्।।
स्नपनं सप्तकलशैः कुर्यात् संवत्सरावधि।

### ९.४.१५० गृहार्चायां संवत्सरपूजालोपे प्रायश्चित्तम्

**क्रि.३२.९१ - ९३**

संवत्सरार्चने हीने प्रतिष्ठां पुनराचरेत्।।
पर्यग्निपञ्चगव्याभ्यां शुद्धिं कृत्वा यथाविधि।

औपासनाग्निमाधाय सर्वदैवत्यवर्जितम्।।
महाशान्तिं सकृद्धुत्वा प्रतिष्ठां पुनराचरेत्।

## ९.४.१५१ गृहार्चायां स्पर्शानर्हस्पर्शे प्रायश्चित्तम्

**क्रि.३२.९३ - ९६**

स्पृष्टे च प्रतिलोमाद्यैः पतितैर्वेददूषकैः।।

पारमात्मिकवर्जं च हुत्वा स्नपनमाचरेत्।
दीक्षितैरनुलोमैश्च द्विजैराशौचसंयुतैः।।

शूद्रैः स्पृष्टे प्रविष्टेऽन्तः पूर्वोक्तैरन्त्यजातिभिः।
संस्नाप्य सप्तकलशैः विष्णुसूक्तं च पौरुषम्।।

धात्रादिमूलहोमं च यद्देवादींस्तथैव च।
हुत्वाऽभ्यर्च्य निवेद्यैव ब्राह्मणानपि भोजयेत्।।

## ९.४.१५२ गृहार्चाप्रायश्चित्ते सर्वदेवसाधारणांशः

**क्रि.३२.९७**

सर्वेषामपि देवानां गृहार्चादोषनिष्कृतौ।
कल्पस्साधारणस्तेषां मन्त्र एव विशिष्यते।।

***

## ५. स्नपनदोषप्रायश्चित्तम्

### ९.५.१ स्नपने कालातिक्रमे प्रायश्चित्तम्

**नि.३५**

अथातो देवदेवस्य वक्ष्ये स्नपननिष्कृतिम्।
यत्र यत्र निमित्तं स्यात् दिवा निशि च सन्धिषु।।

स्नपनकाले चातीते वित्याद्यायां (?) न दूषिता (?)।
महाशान्तिः सुहोतव्या विधिना स्नापयेत् प्रभुम्।।

यद्दिने चाप्यतीते च हुत्वा पूर्वोक्तमार्गतः।
द्विगुणैः कलशैर्देवं स्नापयेत विधानतः।।

### ९.५.२ नित्यादिस्नपनलोपे प्रायश्चित्तम्

**वि.६७.४१६**

नित्यस्नपने हीने वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, वारुणं च दशकृत्वो हुत्वा, पुनः स्नपनं कारयेत्।

ग्रहणकाले देवस्य स्नपने हीने महत्तरो दोषो भवति। पूर्ववत् प्रायश्चित्तं हुत्वा, पश्चात् प्रयत्नेन स्नपनं कारयेत्।

काम्येषु स्नपनेषु हीनेषु पूर्ववत् प्रायश्चित्तं हुत्वा शुद्धोदकैर्वा स्नापयेत्।

**प्र.२७.२०१ - २०४**

**य.४६.२७, २८**

तत्तत्स्नपनहीने तु वैष्णवं वारुणं तथा।।

विष्णुसूक्तं च हुत्वान्ते तत्तत्स्नपनमाचरेत्।

**स.७१.६५ - ६८**

नित्ये च स्नपने हीने विषुवे ग्रहणेऽयने।
पूर्वोक्तां च महाशान्तिमेकाहं जुहुयात् क्रमात्।।

द्विगुणैः कलशैर्देवं स्नापयेत यथाविधि।
एवमेव च संवर्ध्य स्नापनं प्रति कारयेत्।।

अशक्यं कर्म शास्त्रोक्तं कर्तुं तदमरैरपि।
किं बतात्र मनुष्याणां शक्तिः शासनमार्गतः।।

तस्मात् सर्वप्रयत्नेन होमं कुर्याद्विचक्षणः।

**क्रि.२५.७३ - ७५**

कल्पिते स्नपने हीने ग्रहणे विषुवेऽयने।।

एकाहं तु महाशान्तिमब्जाग्नौ जुहुयाद्बुधः।
कलशैर्द्विगुणैर्देवं स्नापयीत यथाविधि।।

एवमेव च संवर्ध्य स्नपनं प्रति कारयेत्।

### ९.५.३ नैमित्तिकस्नपनलोपे प्रायश्चित्तम्

**प्र.२७.२०७, २०८**

सन्ध्याकाले तु संप्राप्ते निमित्तस्नपने तथा।।
नैमित्तिकं समाप्यैव नित्यपूजां समाचरेत्।
अन्यथा वैष्णवं मन्त्रं शतवारं जपेत्सुधीः।।

## ९.५.४ स्नपने प्रतिसरबन्धादिलोपे प्रायश्चित्तम्

**वि.६७. ४१७**

पूर्वरात्रौ प्रतिसरबन्धनं, शयनं च विहीनं चेत्, वैष्णवं, श्रीभूमिदैवत्यं, सौदर्शनं च हुत्वा, तत्काले शयनाधिवासं हित्वा प्रतिसरबन्धनमेव कारयेत्।

एकबेरे कौतुके च शयनं विना प्रतिसरबन्धनं सद्य एव कुर्यात्।

**प्र.२७.२०९, २१०**

[अत्र सौदर्शनम् इत्यस्य स्थाने 'नरसूक्त'मिति दृश्यते।]

**य.४६.३१ - ३४**

## ९.५.५ स्नपने देवप्रबोधनलोपे प्रायश्चित्तम्

**ज्ञा.१०३.१९५**

शयनस्थे तथा देवे प्रभाते सौरं सौम्यं वैष्णवं व्याहृत्यन्तं हुत्वा बेरमुत्थाप्य प्रोक्षणैः प्रोक्ष्याभ्यर्च्य आचरेत्।

**खि.३६.३, ४**

**नि.३५**

शयनस्थितदेवेशे पूर्ववत् स्नानहीनके।
होमं पूर्ववदुद्दिष्टं भोजयेच्छतविप्रकान्।।

## ९.५.६ स्नपने अङ्कुरार्पणपात्रप्रमाणन्यूनतातिरेके प्रायश्चित्तम्

**क्रि.२५.४, ५**

प्रमाणे पालिकादीनां हीने वाप्यधिकेऽपि वा।।

मन्त्रं तद्देवतानां च वैष्णवं विंशतिं यजेत्।
पालिकानामलाभे तु शरावेष्वथवार्पयेत्।।

**स.७१.६, ७**

### ९.५.७ स्नपने अङ्कुरार्पणलोपे प्रायश्चित्तम्

**स.७१.१ - ६**

स्नपनं प्रति वक्ष्यामि प्रायश्चित्तं महर्षयः।
अङ्कुरानर्पयित्वैव स्नापनं नैव चाचरेत्।।

पूर्वेद्युस्तद्दिने वापि प्रायश्चित्तं च कारयेत्।
औपासनाग्निमाहृत्य चाघारं पूर्ववद्यजेत्।।

वैष्णवं ब्राह्मसंयुक्तं वारुणं वैघ्नमेव च।
पङ्क्तीशस्यापि दैवत्यं सौम्यं शान्तं यजेत् क्रमात्।।

जयादीनां च सर्वासां मूर्तिमन्त्रैश्च हूयते।
प्रत्येकं विंशतिं हुत्वा वैष्णवं च शताष्टकम्।।

व्याहृत्यन्तं च हुत्वा तु पूर्वोक्तेन विधानतः।
अङ्कुरार्पणहीने तु पुष्पैः पद्मादिभिस्सितैः।।

पालिकासु प्रपूर्यैतानङ्कुरानिति कल्पयेत्।

**क्रि.२५.१ - ४**

### ९.५.८ स्नपने अङ्कुरार्पणानन्तरस्नपनलोपे प्रायश्चित्तम्

**वि.६७.४१७**

अङ्कुरार्पणे कृते स्नपने हीने वैष्णवं, सौम्यं, श्रीभूमिदैवत्यं, वैघ्नं च हुत्वा, स्नपनं कारयेत्। अङ्कुरार्पणं विना स्नपनं कारयेदिति केचित्।

**प्र.२७.२११, २१२**

**य.४६.३४, ३५**

कृतेऽङ्कुरार्पणे पश्चान्नाचरेत् स्नपनं यदि।।
तथा शान्तिं च हुत्वान्ते स्नपनं सम्यगाचरेत्।

**९.५.९ स्नपनमण्डपे मानन्यूनतातिरेके प्रायश्चित्तम्**

**स.७१.८ - १०**

हीनाधिकेन मानेन मण्डपं कुरुते यदि।
प्रपां वा शालां कूटं वा तथैव स्नपनालयम्।।

अविधिकमलक्षण्यमयुक्तं नैव कारयेत्।
हीनेऽधिके कृते तत्र शान्तिं सम्यक् समाचरेत्।।

वैष्णवं भूमिदैवत्यं प्रत्येकं तु शताष्टकम्।
हुत्वा तु पूर्ववत् कर्म प्रारभेत यथाविधि।।

**क्रि.२५.६**

**९.५.१० स्नपनमण्डपे निषिद्धस्थानप्रायश्चित्तम्**

**स.७१.११ - १४**

आलयस्योत्तरे शान्तिं पुष्टिकामस्तु पूर्वतः।
दक्षिणे मुक्तिकामस्तु बलिकामस्तु वारुणे।।

ईशाने कोणतः कुर्यात् सर्वकामी तु लक्षणम्।
आग्नेये नैर्ऋतेः स्थाने वायव्ये न समाचरेत्।।

तत्रैव यदि कुर्याच्चेत् पुनः स्नपनमाचरेत्।
तत्तद्दिक्पालहोमश्च वैष्णवं च सुहूयते।।

प्रत्येकं विंशतिं हुत्वा पश्चात् कर्म समाचरेत्।

**९.५.११ स्नपनमण्डपे तोरणदोषे प्रायश्चित्तम्**

**स.७१, १७**

तोरणे दोषयुक्ते च मन्त्रान् दौवारिकान् यजेत्।

तत्तद् द्वाराधिपं हुत्वा वैष्णवेन समायुतम्।।

**क्रि.२५.१२, १३**

## ९.५.१२ स्नपनमण्डपे तोरणादिविपर्यासे प्रायश्चित्तम्

**ज्ञा.१०३.१९५**

तोरणादिविपर्यासे तत्तदधिदैवत्यं ---------- हुत्वा असंकुलमारभेत।

**नि.३५**

तोरणादिविपर्यासे तद्दिग्दैवत्यकं यजेत्।

## ९.५.१३ स्नपनमण्डपे तोरणादिलोपे प्रायश्चित्तम्

**नि.३५**

तेषां विहीने वैघ्नं च वैष्णवेन समन्वितम्।।

सौरं सौम्यं प्राजापत्यं सौदर्शनं च हूयताम्।

**ज्ञा.१०३.१९५**

तोरणादि ---------------- विहीने सौरं सौम्यं प्राजापत्यं वैघ्नं सौदर्शनं हुत्वा असंकुलमारभेत।

## ९.५.१४ स्नपनालये पङ्क्तिप्रमाणलोपे प्रायश्चित्तम्

**क्रि.२५.१४, १५**

पङ्क्तौ प्रमाणहीनायां पङ्क्तीशं च समर्चयेत्।।

पङ्क्तीशमन्त्रं जुहुयाद्वैष्णवं पाञ्चभौतिकम्।

विमानपालको मित्रः पङ्क्तीश इति कीर्त्यते।।

**स.७१.१९, २०**

**९.५.१५ स्नपनालये वेदिप्रमाणलोपे प्रायश्चित्तम्**

**ज्ञा.१०३, १९५**

वेद्याः प्रमाणे हीने भूमिमर्घ्यान्तमभ्यर्च्य प्रपायामथवा भूम्यां कूर्चं वासो वा न्यस्य कुर्यात्।

**खि.३६.४ ; नि.३५**

**९.५.१६ स्नपनश्वभ्रे प्रमाणलोपे प्रायश्चित्तम्**

**स.७१.२०**

श्वभ्रं प्रमाणहीनं स्यात् मेदिन्यादिः सुहूयते।।

**क्रि.२५.१६**

**९.५.१७ स्नपनश्वभ्रादि प्रमाणन्यूनतातिरेकप्रायश्चित्तम्**

**वि.६७.४१७**

श्वभ्रे पङ्क्तौ वा प्रमाणहीने अधिके च, वैष्णवं, श्रीभूमिदेवत्यं, पङ्क्तीशमन्त्रं च जुहुयात्।

**प्र.२७.२१३**

[अत्र 'श्रीभूमिदेवत्य'मित्यस्य स्थाने 'भूमिदैवत्य'मिति दृश्यते।]

**य.४६.३६, ३७**

[अत्र 'श्रीभूमिदेवत्य'मिति न दृश्यते।]

**९.५.१८ स्नपने स्थानव्यत्यये प्रायश्चित्तम्**

**वि.६७.४१६**

आग्नेयादिकोणेषु स्नपनं चेद्वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, दिग्दैवत्यमन्त्रांश्च हुत्वा, स्नपनं कारयेत्।

**प्र.२७.२०६, २०७**

**ज्ञा.१०३.१९४, १९५**

अन्ययोः नाचरेत्। न मूलागारे तथाऽऽचरेत्। ----------------आग्नेये नैर्ऋते वायव्ये न समाचरेत्। यदि कुर्यात् शान्तिं हुत्वा पुनरन्यत्र स्नपनमारभेत।

**नि.३५ ; य.४६.२९, ३०**

**खि.३६.१, २**

अथातः सम्प्रवक्ष्यामि स्नपने दोषनिष्कृतिम्।
स्नपनारम्भकाले तु निमित्तानि तु लक्षयेत्।।

आलयस्योत्तरे शान्तिः पुष्टिस्स्यात् प्रमुखे तथा।
अस्थाने स्नपने चेत्तु पुनस्स्नपनमाचरेत्।।

## ९.५.१९ स्नपने कलशप्रमाणन्यूनतातिरेकप्रायश्चित्तम्

**स.७१.१४, १५**

कलशानां प्रमाणस्य न्यूने चाप्यधिकेऽपि च।।

वैष्णवं ब्राह्मसंयुक्तं सौरं सौम्यसमन्वितम्।
महाव्याहृतिसंयुक्तं व्याहृत्यन्तं प्रति प्रति।।

**क्रि.२५.१०, ११**

प्रमाणे कलशानां च न्यूने वाप्यधिकेऽपि वा।
वैष्णवं जुहुयाद् ब्राह्मं महाव्याहृतिसंयुतम्।।

व्याहृत्यन्तं पृथग्घुत्वा गृह्णीयाल्लक्षणान्वितम्।

**वि.६७.४१७**

कलशेषु प्रमाणहीनेषु अधिकेषु च वैष्णवं, वायव्यम् आग्नेयं च जुहुयात्।

**प्र.२७.२१५, २१६**

## ९.५.२० स्नपने कलशभेदने प्रायश्चित्तम्

**प्र.२७.२२३, २२४**

साधिते कलशे भिन्ने त्वन्यमादाय पूर्ववत्।।

आपूर्याभ्यर्च्य दशशः वैष्णवं जुहुयात्ततः।

**ज्ञा.१०३.१९५**

प्रमादात् साधितं पूर्णं कलशं (?) भिद्यते यदि अन्यं कलशमादाय [1]पूर्ववन्मन्त्रेणापूर्याधिदेवमाराध्य द्वादशाक्षरमष्टाक्षरं वा अष्टसहस्रमावर्तयेत्।

**खि.३६. ७ - ९**

कलशः साधितो भिन्नः प्रमादाद्येन केनचित्।
अन्यं कलशमादाय साधयेदभिमन्त्रयेत्।।

पूर्वोक्तेनैव मन्त्रेण शताष्टोच्चारितेन च।
महाशान्तिं च जुहुयाद्दोषोपशमनाय वै।।

कलशानां तु सर्वेषामयमेव विधिस्स्मृतः।

**य.४६.३८, ३९**

साधिते कलशे भिन्ने प्रमादात् तद्व्यपोह्य च।।
अन्यदादाय सम्पूज्य क्रमेणैव समर्चयेत्।

## ९.५.२१ स्नपने कलशभेदनादौ प्रायश्चित्तम्

**क्रि.२५.६६ - ६८**

साधिते कलशे भिन्ने स्पृष्टे शूद्रादिभिस्तथा।।

अन्यं कलशमादाय पूर्ववत् सम्प्रपूरयेत्।

---

1. कुम्भपूजाविधिवत्।

तं स्पृष्ट्वा वैष्णवं मन्त्रं तद्दैवत्यं शतं जपेत्।।

चतुर्विंशतिकृत्वश्च तद्दैवत्यं जुहोति च।

जुहुयाद्वैष्णवं ब्राह्ममष्टोत्तरशतं पुनः।।

**स.७१.५८ - ६०**

**वि.६७.४१८**

साधिते कलशे (भिन्ने) हीने अन्यं कलशमादाय, तथैवाऽऽपूर्य, अभ्यर्च्य, वैष्णवं दशशो जुहुयात्।

### ९.५.२२ स्नपने कलशसङ्कुलप्रायश्चित्तम्

**नि.३५**

सङ्कुले कलहे(शे?) चैव वैष्णवं व्याहृतीर्यजेत्।

### ९.५.२३ स्नपनकलशे श्वकाकादिस्पर्शे प्रायश्चित्तम्

**वि.६७.४१८**

कलशन्यासे कृते श्वकाकाद्यस्पृश्यस्पर्शने सति अन्यं कलशमादाय, पूर्ववत्[1] संसाध्य, शान्तिं वैष्णवं च जुहुयात्।

**प्र.२७.२२६, २२७**

### ९.५.२४ स्नपने कलशादीनां श्वकाकादिस्पर्शे प्रायश्चित्तम्

**ज्ञा.१०३.१९५**

एतेषा[2] श्वकाकाद्यन्त्याशुचिस्पर्शे तदपनीयान्यमादाय अष्टाक्षरं शतमावर्त्य देवमनुज्ञाप्य तत्तत्स्थानेऽभ्यर्च्य स्नापयेत्। संस्पृष्टं चैवमपनीयाचरेत्।

**नि.३५**

1. कलशसाधनवत् 2. कलशादीनाम्।

### ९.५.२५ स्नपने यथोक्तमृदलाभे प्रायश्चित्तम्

**स.७१.२१**

यथोक्तस्थानमृद्धीने यथालाभं प्रगृह्य च।
जुहुयाद्भूमिदैवत्यं वैष्णवं ब्राह्मसंयुतम्।।

**वि.६७.४१७**

मृत्सु हीनासु वैष्णवं, महीदेवत्यं -------------- जुहुयात्।

**क्रि.२५.१६, १७; प्र.२७.२१६**

### ९.५.२६ स्नपनद्रव्यपर्वतप्रमाणलोपे प्रायश्चित्तम्

**प्र.२७.२१७**

पर्वतेष्वप्रमाणेषु वैष्णवं पावकं हुनेत्।

### ९.५.२७ पर्वतस्य मानन्यूनतातिरेके प्रायश्चित्तम्

**स.७१.२२**

हीनाधिकेन मानेन कुर्याच्चेत् पर्वतानपि।
आग्नेयं वैष्णवं हुत्वा व्याहृत्यन्तं प्रति प्रति।।

**क्रि.२५.२९**

### ९.५.२८ स्नपने पर्वतलोपादौ प्रायश्चित्तम्

**वि.६७.४१७, ४१८**

पर्वतेषु हीनेषु तत्तद्वर्णहीनेषु प्रमाणहीनेषु च वैष्णवम्, आग्नेयं च --------
------ जुहुयात्।

**९.५.२९ स्नपने सर्वधान्यालाभे प्रायश्चित्तम्**

**स.७१.२३.२४**

अलाभे सर्वधान्यानां यवं प्रतिनिधिं हरेत्।

यथालाभं प्रगृह्यैव धान्यं प्रक्षिप्य चार्चयेत्।।

जुहुयाद्वायुदैवत्यं वैष्णवं ब्राह्मसंयुतम्।

**क्रि.२५.३०, ३१**

[अत्र 'यथालाभं प्रगृह्यैव' इत्यस्य स्थाने 'व्रीहेरूर्ध्वं यथालाभमिति' दृश्यते।]

**९.५.३० स्नपनद्रव्यधान्यप्रमाणलोपे प्रायश्चित्तम्**

**प्र.२७.२१७**

धान्येषु[1] वैष्णवं चैव वायव्यं च हुनेद्बुधः।।

**९.५.३१ स्नपने धान्यलोपे प्रायश्चित्तम्**

**वि.६७. ४१७, ४१८**

धान्येषु हीनेषु वैष्णवं वायव्यं च जुहुयात्।

**९.५.३२ स्नपने अङ्कुरालाभे प्रायश्चित्तम्**

**स.७१.२४, २५**

अङ्कुराणामलाभे तु दुर्वाङ्कुरमथाहरेत्।।

तद्दैवत्यं च जुहुयाद्वैष्णवं सोमदैवतम्।

**क्रि.२५.३१, ३२**

---

1. 'अप्रमाणेषु' इत्यनुवर्तते।

**प्र.२७.२१८**

अङ्कुरेषु विहीनेषु वैष्णवं गारुडं तथा।

जुहुयाद्व्याहृतीश्चैव यथार्हं संभवेत् पुनः।।

**वि.६७.४१८**

------------- अङ्कुरेषु हीनेषु गारुडं व्याहृतीश्च ------------- जुहुयात्।

**९.५.३३ स्नपने मङ्गलानां मानन्यूनतातिरेके प्रायश्चित्तम्**

**स.७१.२५, २६**

हीनाधिकेन मानेन कुर्याच्चेन्मङ्गलानपि।।

ऐन्द्रं वैष्णवसंयुक्तं महाव्याहृतिसंयुतम्।

**क्रि.२५.३२, ३३**

**९.५.३४ स्नपने अष्टमङ्गललोपादौ प्रायश्चित्तम्**

**वि.६७.४१८**

------------- अष्टमङ्गलेषु हीनेषु तत्तद्वर्णहीनेषु प्रमाणहीनेषु च वैष्णवमैन्द्रं च जुहुयात्।

**प्र.२७.२१९**

**९.५.३५ स्नपनकूर्चादिप्रमाणन्यूनताप्रायश्चित्तम्**

**स.७१.१८, १९**

प्रमाणहीने कूर्चादौ प्रायश्चित्तं सुहूयताम्।

वैष्णवं ब्राह्मसंयुक्तमार्षं सौरेण संयुतम्।।

प्रत्येकं जुहुयाद्विद्वान् षोडशेति प्रकीर्तितम्।

**क्रि.२५.१३, १४**

प्रमाणहीने कूर्चादौ वैष्णवं ब्राह्मसंयुतम्।।

सौरं षोडशकृत्वस्तु हुत्वा कुर्यात् सलक्षणम्।

## ९.५.३६ स्नपनद्रव्यन्यूनतातिरेके प्रायश्चित्तम्

**य.४६.३७, ३८**

मृदादिद्रव्यहीने तु अधिके च विपर्यये।।

गव्यादिद्वादशद्रव्यहीने शान्तिं तथा हुनेत्।

## ९.५.३७ स्नपने पञ्चगव्यप्रमाणलोपे प्रायश्चित्तम्

**प्र.२७.२२१ - २२३**

उक्तप्रमाणहीनेषु पञ्चगव्यादिषु क्रमात्।
प्रधानेषु जलैः पूर्य द्रव्याधिपमनुं तथा।।

वैष्णवेनैव मन्त्रेण सह हुत्वा समाचरेत्।
प्राशनं प्रोक्षणं वापि शास्त्रेऽस्मिन् यत्र चोद्यते।।

अयमेव विधिर्ज्ञेयः पञ्चगव्यस्य सर्वतः।

**वि.६७.४१८**

## ९.५.३८ स्नपने पञ्चगव्ययथोक्तयोगलोपे प्रायश्चित्तम्

**स.७१.२६, २७**

यथोक्तयोगहीने च पञ्चगव्यं च बुद्धिमान्।।

रौद्रं वैष्णवसंयुक्तं प्रत्येकं विंशतिर्यजेत्।

**क्रि.२५.३३, ३४, ३७**

यथोक्तयोगहीने तु पञ्चगव्यस्य बुद्धिमान्।।

रौद्रं च वैष्णवं मन्त्रं प्रत्येकं विंशतिं यजेत्।

---------------------------------------

---------------------------------------

संयोगे पञ्चगव्यस्य मन्त्रहीनं कृते सति।

संयोगविहितं मन्त्रं द्विर्जपेत् पाणिना स्पृशन्।।

**प्र.२७.२२०**

पञ्चगव्ये मन्त्रहीने विहीने योगकर्मणि।

जुहुयाद्वैष्णवं रौद्रं मन्त्रेणैव सुयोजयेत्।।

**वि.६७.४१८**

पञ्चगव्ये योगक्रियाहीने मन्त्रहीने च वैष्णवं, रौद्रं च जुहुयात्।

## ९.५.३९ स्नपने मधुलोपे प्रायश्चित्तम्

**स.७१.३५, ३६**

हीने यथोक्तमधुनि तोयं प्रतिनिधिं हरेत्।

तोयेन स्नापयेच्चेत्तु प्रायश्चित्तं विधीयते।।

ऋग्वेदस्यादिमन्त्रेण वैष्णवेन सुहूयताम्।

हुत्वा पश्चात् प्रकुर्वीत स्नपनं मन्त्रसंयुतम्।।

**क्रि.२५.४३, ४४**

### ९.५.४० स्नपने गन्धोदकलोपे प्रायश्चित्तम्

**स.७१.३९, ४०**

गन्धोदकस्य हीने च न्यूने चैवाथवा पुनः।।

तद्दैवत्यं च हुत्वा तु वैष्णवेन यजेत्पुनः।

**क्रि.२५.४६**

### ९.५.४१ स्नपने अक्षतलोपे प्रायश्चित्तम्

**स.७१.४०, ४१**

अक्षतानामलाभे तु यथालाभं प्रदापयेत्।।

आर्षकं वैष्णवं हुत्वा ब्राह्मं सौम्यसमन्वितम्।

**क्रि.२५.४७**

### ९.५.४२ स्नपने फललोपे प्रायश्चित्तम्

**स.७१.४१ - ४३**

फलानां चैव सर्वेषां यथालाभं प्रगृह्य च।।

सौम्यं वैष्णवसंयुक्तं व्याहृत्यन्तं सुहूयताम्।

फलानामप्यलाभे तु यथासंभवमाहरेत्।।

षड्भिर्मन्त्रैर्वैष्णवैश्च तद्दैवत्यं यजेद्बुधः।

**क्रि.२५.४८**

फलालाभे यथालाभं गृहीत्वा सौम्यवैष्णवैः[1] ।

---

1. हुत्वाभिषिञ्चतीत्यनुवर्तते।

**९.५.४३ स्नपने कुशोदकार्थककुशलोपे प्रायश्चित्तम्**

**स.७१.४३, ४४**

कुशोदककुशालाभे दर्भाग्रांस्तत्र निक्षिपेत्।।

आर्षकं वैष्णवं ब्राह्ममैन्द्रं च जुहुयात् क्रमात्।

**क्रि.२५.४८, ४९**

व्याहृत्यन्तं कुशालाभे दर्भाग्रं तत्र निक्षिपेत्।।

आर्षकं वैष्णवं ब्राह्ममैन्द्रं हुत्वा समाचरेत्।

**९.५.४४ स्नपने रत्नोदकार्थकरत्नलोपे प्रायश्चित्तम्**

**स.७१.४४, ४५**

अलाभे पञ्चरत्नानाममृतं रुक्ममेव च।।

वैष्णवं विष्णुसूक्तं च ब्राह्मं रौद्रं यजेत्ततः।

**क्रि.२५.४९, ५०**

**वि.६७.४१९**

रत्नानामलाभे वैष्णवं हुत्वा सुवर्णं निक्षिपेत्।

**प्र.२७.२२८**

**९.५.४५ स्नपने जप्योदमन्त्रलोपे प्रायश्चित्तम्**

**स.७१.४५, ४६**

जप्योदमन्त्रहीने तु वैष्णवं च शतं यजेत्।।

हुत्वा तु पौरुषं सूक्तं विष्णुसूक्तमतः परम्।

### ९.५.४६ स्नपने सर्वौषधिलोपे प्रायश्चित्तम्

**स.७१.४६, ४७, ५१, ५२**

सर्वौषधीनां चालाभे शालितण्डुलमाहरेत्।।

आदित्यं वैष्णवं हुत्वा ब्राह्मं व्याहृतिसंयुतम्।

------------------------- ------------

ओषधीनामलाभे तु यथालाभं प्रगृह्य च।।

वैष्णवं रौद्रसंयुक्तं हुत्वा कर्म समाचरेत्।

**क्रि.२५.५१, ५२, ५६, ५७**

**खि.३६.१४**

ओषधीनामलाभे तु कुर्यान्मन्त्रजपं बहु।।

### ९.५.४७ स्नपने पुण्यपुष्पलोपे प्रायश्चित्तम्

**स.७१.४७, ४८**

अलाभे पुण्यपुष्पाणां यथालाभं प्रगृह्य च।।

धातृमन्त्रं च हुत्वा तु वैष्णवेन यजेत्पुनः।

**क्रि.२५.५२, ५३**

### ९.५.४८ स्नपने पुण्यपुष्पादिलोपे प्रायश्चित्तम्

**वि.६७.४१८**

पुण्यपुष्पाद्युक्तद्रव्यालाभे यथालाभं सङ्गृह्य तत्तदधिदेवतामन्त्रं वैष्णवं च जुहुयात्।

### ९.५.४९ स्नपने सर्वचूर्णलोपे प्रायश्चित्तम्

**स.७१.४८, ४९**

अलाभे सर्वचूर्णानामौशीरं मौद्गमेव वा।।

सौदर्शनं च हुत्वा तु वैष्णवं च सुहूयते।

**क्रि.२५.५३, ५४**

### ९.५.५० स्नपने कषायार्थद्रव्यलोपे प्रायश्चित्तम्

**क्रि.२५.५४, ५५**

सर्वालाभे कषायार्थम् आश्वत्थीं त्वचमाहरेत्।।

वारुणं वैष्णवं हुत्वा तेनैवोद्वर्तयेत् पुनः।

**स.७१.४९, ५०**

### ९.५.५१ स्नपने तीर्थलोपे प्रायश्चित्तम्

**स.७१.५०, ५१**

तीर्थानामप्यलाभे तु नादेयं तीर्थमाहरेत्।।

गाङ्गेयं वैष्णवं हुत्वा व्याहृतीर्जुहुयात् समम्।

**क्रि.२५.५५, ५६**

### ९.५.५२ स्नपने गन्धलोपे प्रायश्चित्तम्

**स.७१.५२, ५३**

गन्धानां चैव सर्वेषामलाभे चन्दनं हरेत्।।

ऐन्द्रं वैष्णवसंयुक्तं व्याहृत्यन्तं सुहूयते।

**क्रि.२५.५७, ५८**

## ९.५.५३ स्नपने प्लोतलोपे प्रायश्चित्तम्

**क्रि.२५.५८, ५९**

प्लोतालाभेऽन्यवस्त्रेण धौतेन परिमार्जयेत्।।

त्वाष्ट्रं सवैष्णवं विष्णुसूक्तं हुत्वा समाचरेत्।
त्वष्टा रूपाणामधिपतिरिति त्वाष्ट्रमुदाहृतम्।।

**स.७१.५३, ५४**

## ९.५.५४ स्नपने मूलगन्धलोपे प्रायश्चित्तम्

**स.७१.५४, ५५**

मूलगन्धस्य चालाभे दूर्वां वापि ददेत् क्रमात्।।

ब्राह्मं वैष्णवसंयुक्तं प्राजापत्यसमायुतम्।

**क्रि.२५.६०**

## ९.५.५५ स्नपने सर्वधातुलोपे प्रायश्चित्तम्

**क्रि.२५.६१**

अलाभे सर्वधातूनां जातिहिङ्गुलिकं तु वा।
दौर्गं च विष्णुसूक्तं च हुत्वा तेन समाचरेत्।।

**स.७१.५५, ५६**

## ९.५.५६ स्नपने अलङ्कारविपर्यासे प्रायश्चित्तम्

**क्रि.२५.६२ - ६४**

पाणिपादतलौष्ठेषु जातिहिङ्गुलिकं ददेत्।
भूषणाम्बरयोर्दद्यात् हरितालं मनश्शिलाम्।।

सर्वाङ्गेष्वञ्जनं प्रोक्तम् अथवा पक्ष्मणोर्द्वयोः।
गोरोचनं नयनयोः मुखे सर्वत्र वाथवा।।

यथास्थानमलङ्कुर्यात् एतैर्धातुभिरेव वै।
अलङ्कारविपर्यासे यजेद्दौर्गं च वैष्णवम्।।

### ९.५.५७ स्नपने उक्तसङ्ख्याकवस्त्रलोपे प्रायश्चित्तम्

**वि.६७.४१९**

द्वादशवस्त्रालाभे वैष्णवं श्रीदेवत्यं च हुत्वा, अष्ट, चत्वारि वा आच्छाद्य स्नपनं कारयेत्।

**प्र.२७.२२९**

वस्त्रालाभे वैष्णवं च श्रीदैवत्यं च हावयेत्।

### ९.५.५८ स्नपने वस्त्रलोपे प्रायश्चित्तम्

**स.७१.१६**

वस्त्रहीने महान् दोषो भवेद्वस्त्रादिहीनता।
आचार्यं पूजयेद्वस्त्रैः श्रीमन्त्रैर्वैष्णवैर्यजेत्।।

**क्रि.२५.११, १२**

### ९.५.५९ स्नपने भूषणलोपे प्रायश्चित्तम्

**स.७१.५६**

भूषणानामलाभे तु षाण्मुखं वैष्णवं यजेत्।।

**क्रि.२५.६५**

### ९.५.६० स्नपने प्रत्युपचारोक्तद्रव्यलोपे प्रायश्चित्तम्

**क्रि.२५.८३**

प्रतिद्रव्यार्चने हीने उपचारं प्रति प्रति।
अर्चनानिष्कृतिप्रोक्तप्रायश्चित्तं समाचरेत्।।

### ९.५.६१ स्नपने द्रव्यकलशस्थानसङ्करे प्रायश्चित्तम्

**खि.३६.९, १०**

द्रव्याणां कलशानां च यदि स्यात् स्थानसङ्करः।।

द्विगुणं देवमाराध्य यथास्थानं निवेशयेत्।

### ९.५.६२ स्नपने विपर्यासेन द्रव्यादाने प्रायश्चित्तम्

**ज्ञा.१०३**

द्रव्याणामेवं कलशादीनां विपर्यासे तत्तत्स्थाने निवेश्याभ्यर्च्य विष्णुगायत्रीम् अष्टशतं जपेत्।

**नि.३५**

**स.७१.५७, ५८**

विपर्यासोद्धृते द्रव्ये मोहाद्वाथ प्रमादतः।
स्नपनं च न कुर्वीत तावत्कालं न सन्न्यसेत्।।

तद्दैवत्यं च हुत्वा तु वैष्णवं विंशतिर्यजेत्।

**क्रि.२५.६५, ६६**

**वि.६७.४१८**

विपर्यासोद्धृतद्रव्येण स्नापयेत् चेत्, वैष्णवं, तत्तद्द्रव्याधिपदैवत्यं च हुत्वा तद्द्रव्यं संशोध्य शुद्धोदकैः स्नापयेत्।

**प्र.२७.२२४, २२५**

### ९.५.६३ स्नपने अजादिघृतस्नपने प्रायश्चित्तम्

**स.७१.२७ - ३२**

सद्यस्तप्तसुवर्णाभं सुपक्कं च घृतं हरेत्।।

घृतानां चैव सर्वेषां कापिलं सम्प्रशस्यते।
तदलाभेऽन्यगव्यं वा घृतं सङ्गृह्य यत्नतः।।

अज्ञानादर्थलोभाद्वा आजं वा माहिषं तु वा।
गृहीत्वा देवदेवं च स्नापयेच्चेत् सकृन्नरः।।

तद्दोषशमनार्थाय प्रायश्चित्तं यजेत् क्रमात्।
हुत्वा तु पौरुषं सूक्तं विष्णुसूक्तमतः परम्।।

पारमात्मिकसंयुक्तमींकारादिश्च हूयते।
अङ्गहोमं यजेद्विद्वान् पूर्वोक्तेन विधानतः।।

सामवेदादिमन्त्रेण शतमष्टाधिकं यजेत्।

**क्रि.२५.३८ - ४०**

ग्राह्यं क्षीरं च दध्याज्यम् आजमाहिषवर्जितम्।
आजं वा माहिषं वापि गृहीत्वा स्नापयेद्यदि।।

पौरुषं जुहुयात् सूक्तं विष्णुसूक्तमतः परम्।
पारमात्मिकमींकाराद्यङ्गहोमं सकृत्सकृत्।।

सद्यस्तप्तं सुवर्णाभं समपक्कं घृतं हरेत्।

**ज्ञा.१०३.१९५**

मधु (?) अजाविकमहिषीक्षीरदधिस्नापिते शान्तिं हुत्वा पञ्चगव्यैः संस्नाप्य शान्तिं वाच्यारभेत।

**नि.३५.१४, १५**

## ९.५.६४ स्नपने दधिदोषे प्रायश्चित्तम्

**स.७१.३७, ३८**

अशुक्तं दधि गृह्णीयाद्धनं च प्रियदर्शनम्।
दोषयुक्तेन दध्ना चेद्वैष्णवं यजुरादिकम्।।

व्याहृत्यन्तं च हुत्वा तु महाव्याहृतिसंयुतम्।

**क्रि.२५.४४, ४५**

दधि शुद्धं घनं ग्राह्यं निर्दोषं प्रियदर्शनम्।।

सदोषे दध्नि जुहुयात् वैष्णवं यजुरादिकम्।
व्याहृतीश्चैव जुहुयात् 'अतो देवादि' वैष्णवम्।।

## ९.५.६५ स्नपने क्षीरदोषे प्रायश्चित्तम्

**स.७१.३८, ३९**

क्षीरे चोक्तगुणे हीने षण्मन्त्रैरपि वैष्णवैः।।

'शंनो देवी'ति मन्त्रेण प्रत्येकं विंशतिर्यजेत्।

**क्रि.२५.४५, ४६**

व्याहृतीश्चैव जुहुयात् 'अतो देवादि' वैष्णवम्।।

'शंनोदेवी'रिति क्षीरे प्रत्येकं विंशतिं यजेत्।

## ९.५.६६ स्नपनद्रव्ये अशुचिस्पर्शे प्रायश्चित्तम्

**खि.३६.१५, १६**

अस्पृश्यैर्मनुजैः श्वाद्यैः स्पृष्टं चेद्वस्तु साधितम्।
तद्द्रव्यमपनीयान्यद् गृह्णीयान्मन्त्रतः शुचिः।।

स्थानशुद्ध्यै प्रोक्षयेच्च पञ्चगव्यकुशोदकैः।

## ९.५.६७ स्नपने घृते कृम्यादिपतने प्रायश्चित्तम्

**स.७१.३२ - ३४**

कृमिकीटपतङ्गादिर्दृश्यते यदि तद्घृते।।

वस्त्रेणोत्पूय चोद्दीप्य प्रोक्षयित्वा समाहरेत्।
अतो देवादिभिर्मन्त्रैरभिमृश्य यथाक्रमम्।।

सामवेदादिमन्त्रेण वैष्णवेन तथा यजेत्।
हुत्वा तु स्नापयेत् पश्चाद्देवेशं मनसा स्मरन्।।

**क्रि.२५.४० - ४२**

[अत्र 'अतो देवादिभि'रित्यस्य स्थाने 'वैष्णवैर्मन्त्रैः आपो हिष्ठामयादिभि'रिति दृश्यते।]

## ९.५.६८ स्नपनद्रव्ये कृमिकीटादिपतने प्रायश्चित्तम्

**वि.६७.४१८**

द्रव्येषु कृमिकीटादिपतने सति तत् त्यक्त्वा अन्यद्द्रव्यं सङ्गृह्य वैष्णवं तद्द्रव्याधिपदैवत्यं च जुहुयात्।

**प्र.२७.२२७, २२८**

**स.७१.६१, ६२**

कृमिकीटपतङ्गादि द्रव्येषु पतितं यदि।
तद् द्रव्यं वर्जयेन्नित्यं देवयागेषु सर्वतः।।

तद्दैवत्यं शतं हुत्वा चान्यद् द्रव्यं समाहरेत्।

**क्रि.२५.६९, ७०**

**य.४६.३९, ४०**

द्रव्येषु साधितेष्वेव कृमिकीटादिसम्भवे।।
व्यपोह्यान्यत् समादाय शान्तिं हुत्वा समाचरेत्।

### ९.५.६९ स्नपने द्रव्यदाहे प्रायश्चित्तम्

**खि.३६.५, ६**

अग्निना चैव विप्लुष्टे वस्त्रादौ वा परिच्छदे।
प्रपादौ दर्भकूर्चादौ स्नपनार्थं प्रकल्पिते।।

आग्नेयं वारुणं सौम्यमैन्द्रमन्त्रं सवैष्णवम्।
हुत्वा तु निष्कृतिं कर्म यथोक्तं तु समाचरेत्।।

**ज्ञा.१०३.१९५**

स्नपनार्थं प्रकल्पितं द्रव्यमग्निदग्धं चेत् आग्नेयं वारुणं सौम्यं वैष्णवं च हुत्वा पुनरादायाचरेत्।

**नि.३५**

### ९.५.७० स्नपने द्रव्यसङ्करादि प्रायश्चित्तम्

**वि.६७.४१८**

द्रव्याणां सङ्करे वैपरीत्ये तत्तदधिदेवार्चने हीने मन्त्रसङ्कुले हीने च नित्याग्नावष्टोत्तरशतं वैष्णवं यजेत्।

### ९.५.७१ स्नपने उक्तद्रव्याद्यासंभरणे प्रायश्चित्तम्

**वि. ६७. ४१९**

यथोक्तस्नपने येनकेनचिदसंभृते सति विंशतिकलशादि पञ्चकलशान्तैः कलशैः स्नपयेत्।

**९.५.७२ यथोक्तस्नपनलोपे कर्तव्यक्रमः**

**प्र. २७. २२९, २३०**

यथोक्तस्नपने हीने कथंचित्स्नपनं चरेत्।।

अथवा कारयेच्छुद्धस्नपनं वा विधानतः।

**९.५.७३ स्नपने उक्तद्रव्यलोपे प्रायश्चित्तम्**

**ज्ञा.१०३.१९५**

उक्तद्रव्यालाभे तत्तत्प्रतिनिधिं स्मृत्वा तत्तद् द्रव्याधिपं वैष्णवान्तं जुहुयात्।

**९.५.७४ स्नपने हारिद्रस्नानलोपादौ प्रायश्चित्तम्**

**वा.४७**

हारिद्रस्नानहीने च हीने वा शङ्खपद्मयोः।।

सहस्रधाराहीने च तस्य भोगस्य हीनके।

एतैर्दोषस्य शान्त्यर्थं पौण्डरीके विशेषतः।।

हुत्वा तु पौरुषं सूक्तं विष्णुसूक्तं सवैष्णवम्।

सौदर्शनं तु सौवर्णं विष्णुगायत्रिया यजेत्।।

प्रत्येकं दशपर्यायं हुत्वा तच्छास्त्रपारगः।

**९.५.७५ स्नपने विष्वक्सेनार्चनलोपे प्रायश्चित्तम्**

**वि.६७.४१७**

विष्वक्सेनार्चने हीने वैष्णवं वैष्वक्सेनं च जुहुयात्।

**प्र.२७.२१४**

[अत्र 'विष्वक्सेनार्चने' इत्यस्य स्थाने 'शान्ताद्यर्चने' इति दृश्यते।]

## ९.५.७६ स्नपने पङ्क्तीशार्चनलोपे प्रायश्चित्तम्

**वि.६७.४१७**

पङ्क्तीशस्यार्चने हीने तन्मन्त्रं जयादींश्च जुहुयात्।

**प्र.२७.२१४**

## ९.५.७७ स्नपने इन्द्राद्यर्चनलोपे प्रायश्चित्तम्

**वि.६७. ४१७**

इन्द्रादीनामर्चने हीने तत्तन्मन्त्रं वैष्णवं च जुहुयात्।

**प्र.२७.२१५**

## ९.५.७८ स्नपने सर्वदोषप्रायश्चित्तम्

**क्रि.२५.७० - ७३**

अथवा सर्वदोषाणां शान्त्यर्थं स्नपने तथा।।

जुहुयात् पौरुषं सूक्तं विष्णुसूक्तमतः परम्।
पारमात्मिकमींकाराद्यष्टाशीत्याहुतीरपि।।

श्रीसूक्तं रात्रिसूक्तं च दुर्गासूक्तं ततः परम्।
पञ्चवारुणसंयुक्तं जयादीन् वैष्णवानपि।।

यजेद् द्रव्याधिदेवानां जयादीनां च मूर्तिभिः।

**स.७१.६२ - ६४**

## ९.५.७९ स्नपने तैलाभ्यङ्गे प्रायश्चित्तम्

### य.४६.४१ - ४३

तैलाभ्यङ्गं यदि स्याच्चेत् स्नपनादौ तु मोहतः।।

वृथा स्यात् स्नपनं विद्धि तत् कर्म त्वासुरं भवेत्।

तस्मात् संस्नाप्य शुद्धोदैः 'क्षमस्वे'त्यभिपूज्य च।।

महाशान्तिं तथा हुत्वा ततः स्नपनमाचरेत्।

### क्रि.२५.७६, ७७

तैलमोक्षमकृत्वा तु मोहेन स्नापयेद्यदि।।

आसुरं स्नपनं तत्स्यात्तस्य दोषस्य शान्तये।

शान्तिहोमं सकृद्धुत्वा पुनश्च स्नापयेत्तथा।।

## ९.५.८० स्नपने बिम्बपतने प्रायश्चित्तम्

### ज्ञा.१०३.१९५

प्रमादान्निद्राद्यैः पतिते बिम्बे तदा संभ्रान्तमानसो भूत्वा उत्थाप्य पञ्चगव्यैः संस्नाप्य प्रोक्षणैः प्रोक्ष्य श्वभ्रे स्थापयित्वा 'सुवर्भुवर्भू'रिति बिम्बस्य मूर्ध्नि नाभौ पादे च स्पृष्ट्वा 'भगवतो बलेने'ति भगवन्तं प्रणम्याभ्यर्च्य वैष्णवं हुत्वा स्थापयेत्।

### नि.३५

[अत्र 'वैष्णव'मित्यस्य स्थाने 'श्रीभूमिविष्णुदैवत्य'मिति दृश्यते।]

**खि.३६.१६ - १८**

चलिते देवबिम्बे तु प्रमादात् पतितेऽपि वा।।

स्थापयित्वा पुनः श्वभ्रे 'प्रतद्विष्णु' रिति ब्रुवन्।
पञ्चगव्यैः समभ्युक्ष्य मन्त्रैरब्लिङ्गकैः क्रमात्।।

'अणोरणीयान्' इत्युक्त्वा प्रोक्ष्य चावाहनं चरेत्।
'सुवर्भुवर्भूस्थ' इति 'ओं तत्सद्' इति च स्पृशेत्।।

पुनः कर्म समारभ्य स्नपन[1] पूर्ववच्चरेत्।

**९.५.८१ देवीभ्यां सह स्नपने प्रायश्चित्तम्**

**क्रि.२५.७८ - ८२**

स्नापयेद्यदि देवीभ्यां सह तच्चासुरं भवेत्।
तत्रापि शान्तिहोमान्ते देवेशं स्नापयेत् पृथक्।।

स्नापनं बलिबेरं च देवीरहितमेव वै।
औत्सवं स्नापयेच्चेत्तु देवीभ्यां स्नापयेद्विना।।

तत्रापि स्नपनान्ते तु देवीभ्यां सहितं चरेत्।
देवीयुक्ते स्नापने तु पूर्ववत्[2] कारयेद्बुधः।।

बलिबेरे च देवीभ्यां युक्ते तु सह सन्नयेत्।
कौतुके स्नपनं स्याच्चेत् देवीभ्यां सह नाचरेत्।।

---

1. शताष्टकलशस्नपनवत्। 2. स्नपनप्रकरणोक्तक्रमेण।

अज्ञानात् निष्कृतिप्रोक्तप्रायश्चित्तं समाचरेत्।
स्नपने सप्तकलशैः पञ्चभिः कलशैरपि।।

### ९.५.८२ स्नपने हविषः कृम्यादिदूषणे प्रायश्चित्तम्

**क्रि.२५.८९, ९०**

कृमिकीटपतङ्गाद्यैः बह्वन्ने दूषिते यदि।
द्विप्रस्थचरुमुद्धृत्य भस्माद्भिः प्रोक्ष्य मन्त्रतः।।
दग्ध्वा दर्भोल्कयाऽऽस्राव्य घृतं पश्चान्निवेदयेत्।

### ९.५.८३ स्नपने निर्माल्येन पुनरर्चनप्रायश्चित्तम्

**क्रि. २५. ९० - ९२**

निर्माल्येनार्चने चापि निवेदितनिवेदने।।
संस्नाप्य शान्तिहोमान्ते समभ्यर्च्य निवेदयेत्।
प्रायश्चित्तं तथैवोक्तं तत्संस्पृष्टनिवेदने।।
एष एकोविशेषस्स्यादन्यत्सर्वं खिलोक्तवत्।